




# नवनावनीतकम्

श्रीमद्वैद्यरत्न-पण्डित-जीवानन्दशर्म्मतनूजेन

श्रीमता सदानन्दशर्म्मणा प्राणाचार्येण

प्रतिसंस्कृतं

सरलाख्यया हिन्दीभाषाव्याख्यया

समुपष्कृतम्.

तच्चेद

लवपुरीयपंजाबसंस्कृतपुस्तकालयाध्यक्षवर्यैः श्रीमद्भिः

"मोतीलाल बनारसीदास महोदयैः"

स्वमुद्रणालये सम्मुद्रय प्रकाशितम्.

सम्वत् १९८२. सन् १९२६.



वैद्य श्री जादवजी त्रिकमजी आचार्य




# "समर्पणम्"

आयुर्वेदकलानिधिर्गुणनिधिः प्रज्ञोदधिः सद्विधिः
भारद्वाजकुलोद्भवद्विजमणिः सद्वैद्यसंसन्मणिः ।
श्रीमान् भारतवैद्यवर्यमुकुटालङ्कारचूडामणिः
विद्वद्वैद्यवरत्रिविक्रमसुतः श्रीयादवो राजते ॥ १ ॥

श्रीमतां सौराष्ट्रदेशान्तर्गत-पोरबन्दर-पुरवास्तव्यानां, आयु-
र्वेदीयग्रन्थमालासंपादकानां, आयुर्वेदार्णवकर्णधार-
धुरीणानां निखिलभारतवर्षीयपञ्चदशवैद्यसंमे-
लनसभापतिमहोदयानां, आचार्योप-
नामधेयानां श्रीमतां तत्रभवतां

## यादवशर्म्मणां

करकमले समर्प्यते सप्रश्रयं
प्रतिसंस्कृतमिदं

## नवनावनीतकम्

ग्रन्थोपस्कर्त्रा—
भिषजां वशंवदेन
घिल्डियालोपाह्वेन
सदानन्दशर्मणा

नवनावनीतकमालोक्य श्रीमद्भिर्गुरुवर्यैः कविराज नरेन्द्रनाथमित्र महोदयैः प्रदत्तं स्वभिप्रायसूचकं पत्रम्ः–

मया सम्यग्व्यधायि पारायणं सदानन्दशर्मप्रतिसंस्कृतस्य नवनावनीतकाख्यस्य ग्रन्थस्य। समुपलभ्यमानश्च नावनीतकाख्यो ग्रन्थोऽशुद्धिबहुलो यत्र तत्र च त्रुटितसन्दर्भांशो न तथा विदधाति गौरवमायुर्वेदस्य यथायम्। यथा च पूर्वमग्निवेशमहर्षिप्रणीतसंहितामशेषविद्वद्वृन्दवन्द्यो भगवान् पतञ्जलिस्तदनन्तरञ्च दृढबलः कश्चित्पाञ्चनदीयः प्रतिसंश्चक्रेऽनुपलभ्यमानानाञ्च ग्रन्थांशानां पूरणं विदधे यथा वा महामुनिसुश्रुतप्रणीतां संहितां नागार्जुनः प्रतिसंश्चकार अमितं च यशो लेभे तथैव श्रीमान् सदानन्दशास्त्री नावनीतकं प्रतिसंस्कृत्य त्रुटितांशानां पूरणं विधायामितं यशः प्राप्स्यतीत्याशासे। यश्चात्र नवीनानां योगानां सन्निवेशः कृतः स तु विस्तारयति लेशोक्तमित्यादि प्रतिसंस्कृतिलक्षणमनुसृत्यैव महतीमुपयोगितामुपजनयत्यस्य ग्रन्थस्य। यतश्च संस्कर्त्ता कुरुते तन्त्रं पुराणञ्च पुनर्नवमित्यतो नवीनेनानेन सुमहत्प्रयोजनं विदुषां सेत्स्यतीति॥

११—११—८२ } कविराज नरेन्द्रनाथ मित्रः

# "भूमिका"

"अयि आयुर्वेदार्णवकर्णधारधुरीणाः ! परमप्रवीणाः !! प्राणाचार्यचूडामणयः !!! नैतदविदितचरं तत्र भवतां भवतां यदार्यसभ्यताविलोपकाले यवनाधिपत्यकाले वा सुरभारतीसाहित्यं कीदृशीं विषमां दशामवापेति। जानन्त्येव सर्वे यत्तदानीन्तने काले कैश्चिदार्यसाहित्यसौहित्यादरासहिष्णुभि. परमापसदैरनार्यैर्भारतीयसभ्यतायाः परमप्रामाणिका विश्वविदितानवद्यहृद्यविद्याः कृतविद्यविद्वद्वृन्दवद्यवेद्या विविधविषयविनिबद्धाः परमरत्नभूता गद्यपद्यात्मका ग्रन्था अग्निसात्कृताः, कैश्चित्स्वदेशनिनीषया अपहृता, कैश्चिच्च नीरपूरेषु निपातिताश्च। ग्रन्थोऽयमपि तस्मिन्नेव काले केनचिदवगतायुर्वेदतत्त्वेन विपश्चिता बौद्धधर्मावलम्बिना वा चीनराज्यसीमान्तप्रान्तप्रदेशनिकटवर्तिनि तुरुष्कस्थानस्य ( Turkestan ) पूर्वभागे साम्प्रतिककूचार ( Kuchar ) संज्ञकमण्डलमध्यवर्तिनि प्राचीने नगरके स्थापितेत्यनुमीयते। कालवशाद् भूगर्भनिलीनेऽस्मिन्नगरके, समतिक्रान्ते च बहुतिथे काले, प्रचुरधनप्राप्त्याशया तन्नगरनिखननावसरे समासादितं पुस्तकमेतज्जीर्णशीर्णकलेवरं मृदायमानपत्रम् केनापि तन्नत्येन।

" ततश्च कूचारप्रदेशभ्रमणावसरे पुरातत्त्वानुसन्धानरसिकेन बावर (H. Bower C. B ) नामकेन विदुषा तदधिगन्तृपुरुषात्पुस्तकमादाय प्राचीनलिपिपठनसमुपार्जितपरमकीर्तये रूडल्फ हार्नेले (Dr. A. F. Rudolf Hoernle M.A PH.D.)नामकाय विदुषे समर्पितम्। परमसाहसिकेन अनेनापि विदुषा एकविंशतिवर्षाणां महता परिश्रमेण अविकलमपाठि पुस्तकमिदम्। ततश्चैतेन मुद्रापितं पुस्तकमेतत्प्रतिबिम्बितप्राचीनपुस्तकलिपिप्रतिमासहितम्। यद्यपि पुस्तकमेतत् पाश्चात्यैः बावरीयामुद्रितपुस्तक (Bower manuscrip) नाम्ना निर्दिश्यते, तथापि एतत्पुस्तकस्य द्वितीयखण्डगतप्रारम्भिकपद्यप्रदर्शनेन स्फुटमस्य परिचीयते नावनीतकाख्या संज्ञा। यद्यस्य पाश्चात्यैः पूर्वोक्तनाम्ना व्यपदेशः कृतस्तत्र प्राचीनपुस्तकान्वेषणप्रयासप्रत्युपकारप्रदर्शनार्थेति निर्णीयते।

यद्यपि प्राचीनमूलपुस्तकं सप्तखण्डात्मकमेकत्र समुपलभ्य पाश्चात्यै. सहैव मुद्रापितं सप्तखण्डात्मकमेव, परं सप्तखण्डात्मक

मेतत् नैकेन "नावनीतकेति नाम्ना व्यपदेष्टुं शक्यते, यतोहि द्वितीयखण्डगतप्रारम्भिकपद्येषु एतदीयाध्यायविषयसङ्ख्यासमाख्यानप्रदर्शने द्वितीयखण्डरहितानामपरेषां षण्णां खण्डानां द्वितीयखण्डाद् विषयान्तरनिरूपणपरतया समापतति द्वितीयखण्डगतात् ग्रन्थाद् बाह्यविषयता। अतो द्वितीयखण्डनिर्दिष्टस्यैव निबन्धस्य नावनीतकेति संज्ञा भवितुमर्हतीति निर्विवादम्।

अथ नावनीतकनामायं निबन्धः पूर्ण अपूर्णो वेति विजिज्ञासा समुदेति—तत्रेदमुच्यते। यदस्याध्यायविषयसङ्ख्यासमाख्यानपद्येषु—"इत्येते षोडशाध्याया विज्ञेया नावनीतके" इत्यनेन पद्यार्द्धेनास्य स्फुटं षोडशाध्यायात्मकत्वम्। तत्र च समुपलभ्यमानेऽस्मिन् ग्रन्थे अन्त्यौ द्वावध्यायौ समग्रत्रुटितौ, चतुर्दशोऽध्यायश्चाद्यन्तयोस्त्रुटितः। तथाचापरेऽध्याया आद्यन्तपदपाद-पद्य-पद्यकदम्बांशेषु त्रुटिताः समुपलभ्यन्ते। ग्रन्थश्चायं—"अध्यायश्चूर्णयोगानां प्रथमोऽत्र प्रदर्शितः" इत्यादिना प्रथमाध्यायप्रारम्भप्रतिपादितया अध्यायगतविषयानुक्रमणिकया स्ववाच्यविषयं सुस्पष्टमवगमतीति नात्राधिकं विचारणीयमत्र साम्प्रतम्। परमस्य प्रणेता किंनामधेयः, कीदृग् तस्य पाण्डित्यम्, कदा समजनि, कतमं वा प्रदेशं जन्मनालङ्कारेति विजिज्ञासामुदेति। तत्रेदमभिधीयते। यन्नावनीतककर्त्रा स्वग्रन्थे नाकारि स्वनामनिवासादिपरिचायकः क्वापि समुल्लेखः। परमनुमानमाश्रित्य किञ्चिदिह निर्दिश्यते। तथाहि—अनिर्दिष्टनामास्य प्रणेता, अल्पप्रज्ञः पञ्चनदप्रान्तवास्तव्यश्चेत्यनुमीयते। अल्पप्रज्ञता चास्य—"यवाग्वियं प्राहणी पाचनीया" "विडंगयवो पिप्पलिमूलशिग्रुम्" इत्यादितद्रचितपद्यकदम्बेषु सुस्पष्टं दरीदृश्यते। "अलं माध्यानां व्याख्यानेषु कटाक्षनिक्षेपेण" इति मत्वा नेयं प्रतन्यते। परमस्य पञ्चनदप्रान्तवास्तव्यता प्रदर्श्यते—"तथाहि-मूलकुल्तके-निष्कं घटकं कृत्वा डेम्बुकाभिर्दापयेत्। (अ. ८। प-२५) इत्यत्र पञ्चनदप्रान्तीयभाषाप्रसिद्धस्य वरट्यभिधायकस्य "डेम्बू" इति शब्दस्य "डेम्बुका" इति-रूपं प्रतिसंस्कृत्य वरट्यर्थे प्रयोगः कृतः। तथा "चीडायाः जेहवत्काष्ठं सूक्ष्मचूर्णानि कारयेत्" इत्यत्रापि श्रीवासाभिधायकस्य पञ्चनदप्रान्तीयभाषाप्रसिद्धस्य 'चीड़" इति शब्दः

स्य "चीडा" इति रूपं प्रतिसंस्कृत्य तदर्थे प्रयोगः कृतः। अपि च चतुर्दशेऽध्याये पञ्चनदप्रान्तीयभाषाप्रसिद्धस्य अल्पायतनप्रदेशाभिधायकस्य-खुड्ड-(खुड्डा) शब्दस्य खुड्डाकमितिरूपं प्रतिसंस्कृत्य अल्पायतनार्थे प्रयोगः कृत.। अत "पञ्चनदप्रान्तवास्तव्योऽयं महाभागः" इत्येव युक्तं प्रतिभाति। एवम्भूतशब्दप्रयोगस्य च नान्यद्वीजं भवितुमर्हतीति सुशकं वक्तुम्। न चानेन स्वप्रान्तीयभाषाप्रसिद्धाः शब्दा एव व्यवहृता, परमेतत्प्रान्तप्रसिद्धाना मानवसमाजप्रचलितानां प्रथानामपि प्रयोग कृत.। तथाहि—जीवनीयोपसिद्धं च घृतमभ्यञ्जनं हितम्" (अ. १४-प. ३८)। "समभागानि सर्वाणि दध्ना सह विमिश्रयेत्" (अ. १४-प. ४३) इत्यत्र समुपवर्णिता घृताभ्यञ्जनप्रथा, दधिप्रलेपनप्रथा, च पञ्चनदप्रान्ते जनसमाजे विशेषतया (इदानीन्तनेऽपि काले) समाद्रियते अत पञ्चनदवास्तव्योऽयमिति युक्तम्।

यच्च-आत्रेयप्रणीतत्वेन समाम्नातानां लशुनशार्दूलचूर्णादिकानां कतिपययोगानां, आत्रेयाभिहितायां दृढबलप्रतिसंस्कृतायां चरकसंहितायामनुपलम्भाद् दृढबलात्प्राक्तनोऽयं नावनीतककर्ता" इति केषाञ्चिद् भारतीयविदुषां मतं तदपि न सम्मानार्हम्, आत्रेयाभिहितासु अन्यासु संहितास्वपि तत्पाठस्थितपरिकल्पनया संशयास्पदाश्रयणात्।

यद्यपि चरकसुश्रुतभेलादिसंहिताभ्यः संजग्राह योगानविकलं (तदीयपाठात्मकतया) ग्रन्थेऽस्मिन् ग्रन्थकर्ता, परमष्टाङ्गहृदय संहितायाः सम्भवतो न कमपि योगमिति वाग्भटाप्राक्तनोयमिति निश्चेतुं शक्यते।

त्रुटितांशबहुलस्य चास्य प्रतिसंस्कारप्रविकाशयिषुभिः पञ्जाव संस्कृतपुस्तकालयाध्यक्षवर्यैः मोतीलाल बनारसीदासमहोदयैराज्ञप्तोऽहं प्रतिसंस्कारकरणाय साग्रहमविलम्बितम्। कृतविद्यवैद्यवृन्दवन्द्यस्य महर्षिगणस्य सम्पादनार्हे प्रतिसंस्कारे ममायं परिश्रमः सफलतामुपगतो नवेति विद्वांस एव ज्ञास्यन्ति।

प्रतिसंस्कारे चास्मिन् क्वचिदशुद्धमूलपाठो विपरिवर्तित:, सर्वथा त्रुटितांशश्च भाग: क्वचिद्विविधग्रन्थसाहाय्येन क्वचित्स्वरचितपद्यांशेन च पूरितः, क्वचिच्च प्रकरणोपयुक्तास्तन्त्रान्तरोक्ता नवाविष्कृताःस्वानुभूताः स्वाविष्कृताश्च योगाः सन्निवेशिताः। अन्त्यमध्यायद्वयं च मयैवात्र सन्नियोजितम्। नवयोगसमायोगाद्यस्य नवनावनीतकसंज्ञा कृता। नवनावनीतककलेवरविवृद्धिनिवृत्तये समाज्ञप्तोऽहं ( एतन्निबन्धप्रकाशकैः )। विवृद्धिनिवृत्तिविबद्ध एवायं कृतःप्रतिसंस्कारः परिसमाप्यते मयेति चेखिद्यते मदीयं मानसम्। अस्मिंश्च प्रतिसंस्कारकर्मणि श्रीमद्भि गुरुवर्यैःकविराज नरेन्द्रनाथ मित्र महोदयैस्तत्तत्स्थलेषु यत्स्वसंमतिप्रदानेन महत्साहाय्यं प्रदत्तं, तत्सादरं वहाम्यवहितचेतसा।

अपि च सुदुष्करे प्रतिसंस्कारकर्मणि कृतोऽयं प्रयत्नश्चेन्द्रारतीयभिषजामुपकारकणिकामप्युपजनयेत्तदात्मानं सफलपरिश्रमं मन्येयम्। अन्ते तु—

वर्णयोजकदोषेण त्वज्ञानाद्वा प्रमादतः।
कुत्रचित्स्खलनं जातं वर्णान्यत्वादिरूपकम्॥
संशोधयन्तु सततं सन्तस्तदनुकम्पया।
स्खलनं यच्च कुत्रापि स्यान्मे पूरुषदोषतः॥
सयुक्तिकं सूचनीयं श्रीमद्भिस्तद्विशेषतः।
द्वितीयमुद्रणावृत्तौ तत्सर्वं शोधयिष्यते॥

१२—१०—८२
लाहौर

इति निवेदयति :—
भिषजां वशंवदः
सदानन्द शर्मा

# नवनावनीतकस्य विषयानुक्रमणिका ।

विषयाः — पृष्ठाङ्काः


प्रथमोऽध्यायः

मङ्गलाचरणम् १
प्रतिसंस्कर्तृप्रणीता ग्रन्थोपक्रमणिका २
प्रतिसंस्कारस्य प्रयोजनम् २
तन्त्रप्रतिपाद्यविषयानुक्रमणिका ३
अध्यायगतविषयानुक्रमणिका ४
अस्य ग्रन्थस्य अधिकारी ५
तालीशादिचूर्णम् ५
यवानीखाण्डवचूर्णम् ६
गुडदाडिमाद्यवलेहः ६
लाजादिचूर्णम् ६
मधुयष्टिकाद्यवलेहः ७
मयूरपिच्छभस्मादिलेहः ७
विद्रुमभस्मादिलेहः ७
शणबीजादिलेहः ७
एरण्डतैलयोगः ८
सितोपलादिचूर्णम् ८
शठ्यादिकं चूर्णम् ८
हिङ्ग्वादिचूर्णम् ९
हिङ्ग्वादिवटिका १०
लशुनचूर्णम् १०
नवायसचूर्णम् ११
लाक्षादिचूर्णम् १२
रसाञ्जनादिगुटिका १२
अयोरजीयचूर्णम् १३
तिक्तकचूर्णम् १५
वृषद्ध दशकचूर्णम् १५
सिद्धार्थिका गुटिका १६
समशर्करचूर्णम् १६
सूक्ष्मैलाद्यचूर्णम् १७
सौवर्चलाद्यचूर्णम् १७
यवान्यादिचूर्णम् १८
वृहदग्निमुखचूर्णम् १९
जीरकाद्यचूर्णम् २०
भास्करलवणचूर्णम् २०
कफनिःसारिका वटी २२
मन्दाग्निदीपनचूर्णम् २२
क्रिमिमुद्गरचूर्णम् २३
विबन्धहरचूर्णम् २३
वृहद्गङ्गाधरचूर्णम् २४
दाडिमाष्टकचूर्णम् २५
सारस्वतचूर्णम् २५
सुदर्शनचूर्णम् २६
विभीतकादिचूर्णम् २७
कुटजयवाद्यं चूर्णम् २८
शार्दूलचूर्णम् २९
सौवर्चलादिगुटिका २९
अम्लवेतसादिगुटिका ३०
चित्रकादिगुटिका ३०
पाठाद्यं चूर्णम् ३२

| विषयाः | पृष्ठाङ्काः |
|---|---|
| मागधचूर्णम् | ३२ |
| हरिद्रादिचूर्णम् | ३४ |
| शट्यादिगुटिका | ३५ |
| यवानीखाण्डवचूर्णम् | ३५ |
| **द्वितीयोऽध्यायः—** | |
| अमृतप्राशघृतम् | ३७ |
| पानीयकल्याणकघृतम् | ३९ |
| महाकल्याणकघृतम् | ४० |
| तिक्तकघृतम् | ४२ |
| महातिक्तकघृतम् | ४३ |
| पञ्चगव्यघृतम् | ४४ |
| विडङ्गाद्यघृतम् | ४५ |
| क्षीरषट्पलघृतम् | ४६ |
| त्र्यूषणघृतम् | ४७ |
| वासाघृतम् | ४७ |
| चाङ्गेरीघृतम् | ४८ |
| द्वितीयं चाङ्गेरीघृतम् | ४८ |
| कण्टकारिकाघृतम् | ४९ |
| द्राक्षाघृतम् | ४९ |
| रासायनिकंघृतम् | ५१ |
| शरमूलीयघृतम् | ५२ |
| मायूरघृतम् | ५४ |
| महात्र्यूषणघृतम् | ५६ |
| च्यवनप्राशोऽवलेहः | ५७ |
| दशाङ्गघृतम् | ६० |
| नाराचकघृतम् | ६१ |
| मूलकघृतम् | ६२ |
| लशुनाद्यघृतम् | ६४ |
| आमलकघृतम् | ६५ |
| सिद्धोषधघृतम् | ६६ |
| धान्वन्तरघृतम् | ६७ |
| मेथीमोदकः | ६९ |
| चव्यादिघृतम् | ७० |
| बृहद्वासावलेहः | ७० |
| छागलाद्यघृतम् | ७१ |
| धान्वन्तर घृतम् | ७२ |
| जीवन्त्याद्यं घृतम् | ७३ |
| विषहरघृतम् | ७४ |
| बिन्दुघृतम् | ७५ |
| महाबिन्दुघृतम् | ७६ |
| सारस्वतघृतम् | ७७ |
| **तृतीयोऽध्यायः** | |
| प्रथमं बलातैलम् | ७८ |
| द्वितीयं बलातैलम् | ८० |
| रास्नादितैलानि | ८१ |
| तृतीयं बलातैलम् | ८१ |
| अमृततैलम् | ८२ |
| कुब्जप्रसारणीतैलम् | ८५ |
| नकुलतैलम् | ८६ |
| मूलकतैलम् | ८७ |
| महामाषतैलम् | ८८ |
| बृहत्कासीसाद्यतैलम् | ८९ |
| सिद्धार्थकतैलम् | ९० |
| मूलकतैलम् | ९१ |
| मूलकतैलम् | ९२ |
| सहचरतैलम् | ९३ |
| मधुयष्टिकातैलम् | ९४ |
| अश्वगन्धातैलम् | ९४ |
| हिमसागरतैलम् | ९८ |
| अश्वगन्धातैलम् | ९७ |

| विषयाः | पृष्ठाङ्काः | विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| चन्दनाद्यतैलम् | १०० | आढकीमूलघृतम् | ११४ |
| अनुवासनिकस्नेहः | १०० | बृहत्कुटजावलेहः | ११५ |
| पिप्पल्याद्यतैलम् | १०० | मधुकादिचूर्णम् | ११६ |
| सिन्दूराद्यतैलम् | १०१ | लाक्षाचूर्णम् | ,, |
| कासीसाद्यतैलम् | १०२ | क्षयकासे अक्रमा० | ,, |
| पालित्यहरतैलम् | १०३ | पिप्पल्यादिलेह | ,, |
| फणिज्झकाद्यतैलम् | १०३ | वासावलेहः | ११७ |
| श्वदंष्ट्रातैलम् | १०४ | अगस्त्यहरीतक्यवलेहः | ,, |
| मूलकतैलम् | १०५ | हिक्कादिरोगेषु पथ्यक्रमः | ११८ |
| मधुकाद्यतैलम् | १०६ | शठ्यादिकं चूर्णम् | ,, |
| स्नेहपाके तत्परिभाषा० | १०६ | शृङ्ग्यादिचूर्णम् | १२० |
| कृष्णासर्पतैलम् | १०७ | खर्जूरादिलेह | ,, |
| चतुर्थोऽध्यायः | | द्राक्षादिलेहः | १२१ |
| तिलादिप्रदेहः | १०८ | खर्जूरादिलेहः | ,, |
| गोधूमचूर्णादिलेपः | १०८ | वासाघृतम् | ,, |
| पिप्पलत्वक्क्वाथः | १०८ | दुग्धप्रयोगः | १२२ |
| पलादिप्रलेपः | १०८ | द्राक्षाघृतम् | ,, |
| त्रिकशूलहरो लेपः | १०९ | समदुग्धकघृतम् | १२२ |
| चित्रकादिचूर्णम् | १०९ | द्राक्षाद्यं ,, | १२३ |
| हरीतक्यादिचूर्णम् | १०९ | सर्षपतैलादिप्रयोगः | १२४ |
| द्वितीयं हरीतक्यादिचूर्णम् | ११० | व्योषादिलेहः | ,, |
| रसाञ्जनादिचूर्णम् | ११० | त्र्यूषणादिचूर्णम् | ,, |
| द्वितीयं रसाञ्जनादिचूर्णम् | ११० | द्वितीयं त्र्यूषणादिचूर्णम् | १२५ |
| त्रपुषबीजादियोगः | १११ | शृङ्ग्यादिचूर्णम् | ,, |
| दाडिमाष्टकचूर्णम् | १११ | गोबालादिधूमः | ,, |
| भूनिम्बादिचूर्णम् | ११२ | कट्फलरोहिण्यादिचूर्णम् | १२६ |
| चन्दनाद्यचूर्णम् | ११२ | लाजादिचूर्णम् | ,, |
| दध्यादियोग | ११४ | सैन्धवचूर्णम् | ,, |
| बदरीपत्रादिकल्कः | ११४ | मयूरपुच्छविभूतियोगः | १२७ |
| त्रपुसबीजादिकल्कः | ११४ | पिप्पल्याद्यवलेहः | ,, |

| विषयाः | पृष्ठाङ्काः | विषया | पृष्ठाङ्काः |
|---|---|---|---|
| पिप्पल्यादिलेहः | ,, | कार्पासमज्जादिप्रलेपः | ,, |
| त्र्यूषणादिचूर्णम् | ,, | बदरघृतम् | ,, |
| यवक्षारादि ,, | १२८ | बिल्वमूलादिनस्यम् | ,, |
| द्राक्षादिलेहः | ,, | जीवनीयतैलम् | ,, |
| पिप्पल्यादिदुग्धपाकः | ,, | भृङ्गराजनस्यम् | १३९ |
| तुगाक्षीर्यादिलेहः | ,, | पाटलादिलेपः | ,, |
| दन्तीहरीतकयवलेहः | १२९ | लवणादिलेपः | ,, |
| मध्वासवः | १३० | नागरादिलेप | १४० |
| मधुकादिशीतकषायः | १३१ | नागरप्रलेपः | ,, |
| पञ्चसारम् | ,, | त्र्यूषणाद्यचूर्णम् | ,, |
| सन्ततादिज्वरघ्नाः कषायाः | ,, | धात्रीप्रलेपः | ,, |
| मलबन्धहर कषायः | १३२ | सुधानुसारनस्यम् | ,, |
| कोष्ठबद्धताहर कषायः | ,, | शट्यादिचूर्णम् | १४१ |
| शट्यादिकक्वाथः | ,, | शुण्ठीदुग्धम् | ,, |
| बृहत्यादिगणक्वाथः | १३३ | सक्तुकधूमप्रयोगः | ,, |
| अरिष्टपत्रादिक्वाथः | ,, | कण्डीरमसप्रयोगः | ,, |
| चन्दनादिकषायः | ,, | कासीसादिगुटिका | १४२ |
| सर्वज्वरहरः कषायः | १३४ | अर्कमूलादिगुटिका | ,, |
| कर्कटकमांसस्वेद. | ,, | अजाज्यादिचूर्णम् | ,, |
| शिग्राद्यञ्जनम् | ,, | विडङ्गादिकवलग्रहः | ,, |
| शिरीषाद्यञ्जनम् | १३५ | सोमराजिकादिवटी | १४३ |
| पञ्चभद्रकषायः | ,, | यवक्षारादिगण्डूषः | ,, |
| पटोलपत्रादिकषायः | ,, | हिंग्वादितैलम् | ,, |
| कर्णमूलशोथहरो लपः | १३६ | अजामूत्रप्रयोगः | ,, |
| चित्रकादिचूर्णम् | ,, | पिप्पल्याद्यतैलम् | १४४ |
| पुचेलकादिलेपः | ,, | सिन्दुवारद्रवयोगः | ,, |
| मुचुकुन्दादिलेपः | १३७ | समुद्रफेनचूर्णम् | ,, |
| प्रपौण्डरीकादिलेपः | ,, | बिल्वतैलम् | ,, |
| करवीरादिलेपः | ,, | हरितालपूरणम् | १४५ |
| विडादिनस्यम् | १३८ | जातितैलम् | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| पिप्पलीक्षारतैलम् | " |
| हिंग्वादितैलम् | " |
| शशाङ्कलेखाद्यवलेहः | " |
| पामाहरः प्रयोगः | १४६ |
| सिध्महरो लेपः | " |
| मूलकबीजादिलेपः | " |
| श्वेतकरवीराद्यतैलम् | १४७ |
| हरिद्राद्यतैलम | " |
| दद्रुहरः प्रलेपः | " |
| आरग्वधदललेपः | १४८ |
| पामाहरः प्रलेपः | " |
| वृहत्सिन्दूराद्यं तैलम् | " |
| भल्लातकरसायनम् | " |
| नलदादिलेपः | १५० |
| निशादिलेपः | " |
| शिरीषत्वगादिलेपः | " |
| धात्रीफलादिलेपः | " |
| यवक्षारादिलेपः | १५१ |
| मूलकबीजादिलेपः | १५१ |
| मूलकबीजादिप्रलेप | १५१ |
| एरण्डबीजादियोगः | १५१ |

मूत्रकृच्छ्रहरा योगाः

| विषयाः | पृष्ठाङ्काः |
|---|---|
| दुग्धयोगः | १५१ |
| मृद्वीकादियोगः | १५२ |
| एर्वारुकबीजप्रयोगः | १५२ |
| त्रिकुंकुमप्रयोगः | १५२ |
| लोहचूर्णप्रयोगः | १५२ |
| हिंस्रादिचूर्णम् | १५२ |
| तृणपञ्चमूलादिक्वाथः | १५३ |
| यवक्षारप्रयोग | १५३ |
| शतावर्यादिकषायः | १५३ |
| सूक्ष्मैलाचूर्णम् | १५३ |
| तृणपञ्चमूलक्वाथः | १५४ |
| एलादिचूर्णम् | १५४ |
| गोक्षुरचूर्णम् | १५४ |
| शिलाजतुयोगाः | १५४ |
| अपामार्गक्षारयोगः | १५४ |
| कुसुम्भपुष्पादियोगः | १५५ |

अथ रक्तपित्तहरा योगाः

| विषयाः | पृष्ठाङ्काः |
|---|---|
| द्राक्षादिस्वरसप्रयोगः | १५५ |
| दाडिमपुष्पादिस्वरसप्रयोगाः | १५५ |
| खदिरसारादिचूर्णम् | १५५ |
| ह्रीबेरादिकषायः | १५६ |
| कुटजत्वगादिकषायः | १५६ |

अथ शोथहरा योगाः

| विषयाः | पृष्ठाङ्काः |
|---|---|
| पुनर्नवादिचूर्णम् | १५७ |
| हरीतक्यादि चूर्णम् | १५७ |
| अग्निमोदकः | १५७ |
| नवायसचूर्णम् | १५७ |
| पुनर्नवादिलेपः | १५८ |
| भूनिम्बादिचूर्णम् | १५८ |
| पिप्पल्यादिचूर्णम् | १५८ |
| कृष्णमृदादिलेपाः | १५९ |
| पुनर्नवाष्टकक्वाथः | १५९ |

अथ च्छर्दिहरा योगाः–

| विषयाः | पृष्ठाङ्काः |
|---|---|
| दाडिमादियोगः | १५९ |
| कोलमज्जादियोग | १६० |
| मयूरपुच्छभस्मयोगः | १६० |
| करञ्जबीजादियोगः | १६० |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| अश्वत्थवल्कलसस्मजलम् | १६० |
| आम्रास्थिक्वाथः | १६० |
| मातुलुङ्गपल्लवादियोग | १६१ |
| लाजादियोगः | १६१ |
| चन्दनकल्कप्रयोगः | १६१ |
| **तृष्णाहरा योगाः** | |
| वटप्ररोहादिगुटिका | १६१ |
| मधुयष्टिकादिगुटिका | १६२ |
| पथ्यक्रमः | १६२ |
| तप्तलोष्टनिर्वापितजलम् | १६२ |
| परूषकादिजलम् | १६२ |
| तर्पणम् | १६२ |
| धात्रिकादिलेपः | १६३ |
| **प्रमेहहरा योगाः** | |
| सुरदार्वादिक्वाथः | १६३ |
| नवजीवनचूर्णम् | १६३ |
| यवतर्पणम् | १६४ |
| श्लेष्मप्रमेहहरः क्वाथः | १६४ |
| पित्तमेहहरः क्वाथः | १६५ |
| गोक्षुरगुग्गुलुवटिका | १६५ |
| लोहादिचूर्णम् | १६५ |
| श्वदंष्ट्रादिचूर्णम् | १६६ |
| निशाचूर्णम् | १६५ |
| तिक्तकचूर्णम् | १६६ |
| **विसर्पहरा योगाः** | |
| मसूरादिलेपः | १६७ |
| विसर्पहरः क्वाथः | „ |
| पटोलादिक्वाथः | १६८ |
| खदिरादि क्वाथः | „ |
| महातिक्तकादिप्रयोगः | „ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **पाण्डुकामलाचिकित्सा** | |
| त्रिवृच्चूर्णप्रयोगः | १६९ |
| फलत्रिकादिकषायः | „ |
| मधुयष्टिचूर्णम् | „ |
| हरिद्राचूर्णयोगः | „ |
| त्रिफलाद्यवलेहः | „ |
| आमलकाद्यवलेहः | „ |
| **पञ्चमोऽध्यायः** | |
| अश्वगन्धादिबस्तिः | १७१ |
| यष्टीमधुकबस्तिः | १७२ |
| जीवनीयबस्तिः | „ |
| रास्नाद्यबस्तिः | „ |
| दशमूलाद्यबस्तिः | „ |
| विडङ्गाद्यबस्तिः | १७४ |
| पटोलाद्यबस्तिः | १७५ |
| हबुषाबस्तिः | १७६ |
| पित्तहरो बस्तिः | १७६ |
| वैशेषिकबस्तिः | १७७ |
| मुस्ताद्य क्षीर बस्तिः | १७८ |
| धातुप्रबस्तिः | १७९ |
| सिद्धबस्तिः | १७९ |
| वृष्यबस्तिः | १७९ |
| कफहरबस्ति | १८० |
| सर्वसाधकबस्तिः | १८१ |
| रसायनबस्तिः | १८१ |
| शाल्मलिबस्तिः | „ |
| पिच्छाबस्तिः | १८२ |
| मूत्रबस्तिः | „ |
| क्षारबस्तिः | १८३ |
| वैतरणबस्तिः | १८४ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| एरण्डाद्यवर्त्तिः | ,, |
| षष्ठोऽध्यायः | |
| पिप्पलीवर्द्धमानरसायनम् | १८९ |
| काकमाचीरसायनम् | १८९ |
| त्रिफलारसायनम् | १९० |
| गोक्षुरकरसायनम् | ,, |
| वाराहीकन्दरसायनम् | १९१ |
| वाराहीचूर्णरसायनम् | १९१ |
| वाराहीघृतरसायनम् | ,, |
| पिप्पलीप्रलेपकरसायनम् | ,, |
| सोमराजीरसायनम् | १९२ |
| द्वितीयं सोमराजीरसायनम् | ,, |
| तृतीयं सोमराजीरसायनम् | १९३ |
| भल्लातकरसायनम् | ,, |
| मण्डूकपर्ण्यादिरसायनचतुष्टयम् | १९४ |
| मधुयष्टीरसायनम् | ,, |
| त्रिफलारसायनम् | ,, |
| पुनर्नवारसायनम् | १९५ |
| मूर्वादीनां कल्पाः | ,, |
| हरीतकीरसायनम् | ,, |
| बीजकस्य रसायनम् | ,, |
| पलाशबीजरसायनम् | १९६ |
| द्वितीयं पिप्पलीरसायनम् | ,, |
| पिप्पलीवर्द्धमान रसायनम् | १९७ |
| मेध्यरसायनम् | ,, |
| स्वर्णरसायनम् | १९८ |
| भृङ्गराजरसायनम् | ,, |
| द्वितीयं भृङ्गराजरसायनम् | ,, |
| तृतीयं भृङ्गराजरसायनम् | १९९ |
| त्रिफलारसायनम् | ,, |
| नागबलारसायनम् | ,, |
| काकमाचीरसायनम् | २०० |
| भल्लातकरसायनम् | २०१ |
| कृष्णतिलरसायनम् | २०२ |
| श्वदंष्ट्राद्यचूर्णम् | २०२ |
| वचारसायनम् | ,, |
| मण्डूकपर्णीरसायनम् | २०३ |
| ऋतुविभागेन हरीतकीरसायनम् | २०३ |
| गन्धकराजरसायनम् | २०३ |
| पलाशबीजतैलम् | २०४ |
| लाङ्गलिकारसायनम् | ,, |
| शतावरीरसायनम् | २०५ |
| शतावर्यादिचूर्णम् | २०६ |
| नस्यतैलरसायनम् | ,, |
| आश्विनरसायनम् | २०७ |
| अश्वगन्धाद्यं रसायनम् | २०८ |
| अश्वगन्धारसायनम् | २०८ |
| सप्तमोऽध्यायः | |
| यवागूलक्षणम् | २०९ |
| यूषलक्षणम् | २१० |
| पेयालक्षणम् | ,, |
| ज्वरहरोयूषः | ,, |
| लाजपेया | ,, |
| पञ्चकोलसाधितायवागूः | ,, |
| संग्राहिणी यवागूः | २११ |
| शालपर्ण्यादियवागूः | २११ |
| रक्तातिसारघ्नी यवागूः | २११ |
| आममूत्रकृच्छ्रहर यवागूद्वयम् | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| कृमिघ्नी यवागूः | २१२ |
| विपासाहरी यवागूः | २१२ |
| विषघ्नी यवागूः | २१२ |
| बृंहणी यवागू | २१२ |
| जीर्णप्रतिश्यायहरी यवागूः | २१२ |
| कर्षणी यवागूः | २१३ |
| स्नेहनी यवागूः | २१३ |
| श्वासादिहरी यवागूः | २१३ |
| पक्वाशयरुजाहरी यवागूः | २१३ |
| वर्चोनिरस्यनी यवागूः | २१३ |
| संग्रहणादीयवागूद्वयम् | २१३ |
| यवागूद्वयम् | २१४ |
| यवागूप्रयोगौ | २१४ |
| यवागूद्वितयम् | २१४ |
| वातकफघ्नं यवागूद्वयम् | २१५ |
| पित्तहरा यवागूः | २१५ |
| आर्षमन्त्रः | २१५ |
| यवागूद्वयम् | २१६ |
| षडङ्गयूषम् | २१६ |
| अतिसारहरी यवागूः | २१६ |
| सर्वातिसारहरी यवागूः | २१६ |
| संग्रहणीहरी यवागूः | २१६ |
| कृमिहारिणी यवागूः | २१६ |
| रक्तपित्तहरी यवागूः | २१७ |
| अतिसारहरी यवागूः | २१७ |
| ज्वरहरी यवागू | २१८ |
| कल्याणिका यवागूः | ११८ |
| वातहरी यवागू | |
| अष्टमोऽध्यायः | |
| कुलीरशृङ्गीचूर्णम् | २१९ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| सारस्वतघृतम् | २१६ |
| आमलकाद्यं घृतम् | २१९ |
| शतावरीघृतम् | २२० |
| विंशतिवेगिको योगः | २२० |
| क्षीरकाकोलीयोगः | २२० |
| श्वदंष्ट्रादियोगः | २२० |
| मधुकचूर्णम् | २२१ |
| विदार्यादिप्रयोगः | २२१ |
| पञ्चशर्करचूर्णम् | २२१ |
| स्वयंगुप्तादिमोदकः | २२१ |
| तिलयोगः | २२२ |
| गोधूमयोगः | २२२ |
| माषयोगः | २२२ |
| विदारीयोगः | २२३ |
| विदारीचूर्णम् | २२३ |
| आमलकचूर्णम् | २२३ |
| अश्वगन्धायोगः | २२३ |
| स्तम्भनयोगः | २२३ |
| शुक्रस्तम्भनयोगः | २२४ |
| विदार्यादिपूपलिका | २२४ |
| शतावरीयोगः | २२४ |
| कुलीरशृङ्ग्यादिशष्कुलिका | २२४ |
| चटकाण्डप्रयोगः | २२५ |
| कुक्कुटमांसप्रयोगः | " |
| गोक्षुरकादिचूर्णम् | " |
| माषयूषादिप्रयोग | " |
| बस्ताण्डप्रयोगः | २२६ |
| माषदुग्धयोगः | " |
| दुग्धप्रयोग | " |
| घृतगे दुग्धयोगः | " |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **नवमोऽध्यायः** | |
| वैदेहिका वर्ति | २२७ |
| अक्षबीजादिगुटिका | „ |
| अक्षिरोगहरी वर्तिका | २२८ |
| पुष्पाञ्जनादिरसक्रिया | „ |
| अक्षिशूलहर प्रयोग. | „ |
| सैन्धवाद्यञ्जनम् | „ |
| नेत्रशूलहर प्रयोग | २२९ |
| चूर्णाञ्जनम् | २२९ |
| आन्ध्यहरो योगः | २२९ |
| तुत्थाञ्जनम् | २२९ |
| चन्द्रोदयावर्ति | २३० |
| उशीरादिलेप. | „ |
| मन.शिलाद्यञ्जनम् | „ |
| सिद्धयोगः | २३१ |
| आश्च्योतनम् | „ |
| नेत्रशूलहर. प्रयोगः | „ |
| नेत्रामयहरः प्रयोगः | २३२ |
| रसाञ्जनादिप्रयोगः | „ |
| अभिष्यन्दहरी वर्ति. | २३२ |
| सौवर्चलाद्यञ्जनम् | „ |
| हिततमावर्तिः | „ |
| पिल्लापहारिका वर्तिः | „ |
| स्रोतोञ्जनाद्यञ्जनम् | २३४ |
| गरिकाद्यञ्जनम् | „ |
| पथ्यावर्ति | २३५ |
| शिवावर्ति. | „ |
| अगुर्वाद्यञ्जनम् | „ |
| **दशमोऽध्यायः** | |
| भृङ्गराजाद्यतैलम् | २३६ |
| प्रपौण्डरीकाद्यतैलम् | „ |
| केशकृष्णीकरणम् | २३७ |
| केशकृष्णीकरो योगः | „ |
| पलितहरो योग. | „ |
| पलितहर. प्रयोगः | „ |
| पालित्यहर तैलम् | २३८ |
| द्वितीयं पालित्यहरतैलम् | „ |
| आमलकाद्यघृतम् | „ |
| त्रिफलाद्यतैलम् | २३९ |
| द्वितीयं त्रिफलाद्यतैलम् | „ |
| केशस्थिरीकरणम् | २४० |
| केशोत्पादनम् | २४१ |
| पलितप्रतिषेधक प्रयोगः | „ |
| गुञ्जापत्रादिलेप | „ |
| **एकादशोऽध्यायः** | |
| हरीतक्याः परिचयप्रश्नः | २४२ |
| ब्रह्मणः प्रत्युत्तरम् | „ |
| हरीतक्या उत्पत्तिः | „ |
| हरीतक्या जातयः | २४३ |
| तासां स्वरूपाणि | „ |
| तासां प्रयोगः | „ |
| विजयायाः प्राधान्यम् | „ |
| त्रिवृतायाः प्राशस्त्यम् | २४४ |
| हरीतक्या माहात्म्यम् | „ |
| हरीतक्या पञ्चरसा | „ |
| हरीतकीरसायनम् | २४५ |
| गुडहरीतकीयोग. | „ |
| अभया प्रयोगः | „ |
| प्रथमो विरेचनप्रयोगः | „ |
| द्वितीयो विरेचनयोगः | २४६ |
| तृतीयो विरेचनयोगः | „ |
| हरीतकीरसायनम् | „ |
| हरीतक्या माहात्म्यम् | २४७ |
| **द्वादशोऽध्यायः** | |
| शिलाजतु वर्णनम् | २४८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| भावनया तद्वीर्योत्कर्षः | ,, |
| भावनायाः प्रकारः | ,, |
| लोहसाहचर्येण दीर्घायुष्करत्वम् | २४९ |
| मात्राया त्रैविध्यम् | ,, |
| शिलाजतुनः स्वरूपम् | २५० |
| शिलाजतुभेदाः | ,, |
| शिलाजतुभेदानां लक्षणानि | ,, |
| शिलाजतुप्रयोगे वर्जनीयम् | ,, |
| शिलाजतुनः सामान्येन भावनौषधानि | २५२ |
| शिलाजतुनः प्राशस्त्यम् | ,, |
| त्रयोदशोऽध्यायः | |
| चित्रकस्य त्रैविध्यम् | २५३ |
| त्रिविधचित्रकपरिचयः | ,, |
| चित्रकस्य ग्रहणकालः | २५४ |
| चित्रकस्य गुणाः | २५५ |
| चित्रकरसायनम् | ,, |
| चित्रकरसायनम् | २५६ |
| चतुर्दशोऽध्यायः | |
| सुवर्णचूर्णम् | २५६ |
| त्वरया दन्तोद्गमनोपायः | २५७ |
| अतिविषाचूर्णम् | ,, |
| वचाचूर्णम् | ,, |
| नरेन्द्रगुटिका | ,, |
| आनन्दोदयचूर्णम् | २५८ |
| प्राणेश्वरचूर्णम् | २५९ |
| बालरोचनचूर्णम् | २६० |
| बालाभयाचूर्णम् | २६१ |
| बालज्वरेभांकुशचूर्णम् | २६२ |
| बालकक्रन्दनचिकित्सा | ,, |
| मण्डलचिकित्सा | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ज्वरे स्तन्यशोधनम् | ,, |
| उशीराद्यतैलघृते | २६३ |
| मधुपर्णीक्षीरम् | ,, |
| अष्टमङ्गलघृतम् | ,, |
| उन्मर्दनम् | २६४ |
| क्षीरद्रोणीविगाहनम् | ,, |
| कट्फलादिलेहः | २६५ |
| हरेणुकादिलेहः | ,, |
| कुष्ठादिचूर्णम् | ,, |
| भद्रमुस्तादिचूर्णम् | ,, |
| लाक्षादिचूर्णम् | २६६ |
| बालचन्द्रामृतचूर्णम् | ,, |
| तृष्णाहरो योगः | ,, |
| प्रियंगुकादिकल्कः | २६७ |
| छर्दिहरा योगाः | ,, |
| दाहहरो योगः | ,, |
| विस्फोटकचिकित्सा | ,, |
| मञ्जिष्ठादिलेपः | २६८ |
| मुखपाकचिकित्सा | ,, |
| धातकीपुष्पादितैलम् | २६९ |
| बिल्वाद्यं तैलम् | ,, |
| बिल्वतैलम् | ,, |
| सर्वगन्धाद्यं तैलम् | २७० |
| कर्णधूपनम् | ,, |
| कुलीरशृङ्ग्यादिलेहः (द्वयम्) | ,, |
| भार्ग्यादिलेहः | २७१ |
| भद्रदार्वादिलेहः | ,, |
| धान्यादिलेहः | ,, |
| चातुर्जातकादिलेहः | ,, |
| पिप्पल्यादिचूर्णयोगः | ,, |
| क्षारप्रयोगः | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| बिल्वमूत्रकषायः | २७२ |
| वातशूलहरो योगः | ,, |
| प्रवाहिकाहरो योगः | ,, |
| मधुकादिप्रयोगः | ,, |
| प्रवाहिकाहरो योगः | २७३ |
| मुखपाकक्रमः | ,, |
| गैरिकादिलेपः | ,, |
| उरोघातहरः प्रयोगः | २७४ |
| लघुपञ्चमूलकषायः | ,, |
| मूत्रग्रहहरोलेहः | २७५ |
| यवक्षारप्रयोगः | ,, |
| कर्णस्रुतिहरं तैलम् | २७६ |
| क्रिमिघ्नं चूर्णम् | ,, |
| कुष्ठाद्युद्वर्तनम् | ,, |
| तृष्णाहर कषायः | २७७ |
| दाडिमबीजाद्यवलेहः | ,, |
| पित्तज्वरहरः प्रलेपः | २७८ |
| कासघ्नो लेहः | २७९ |
| कुकूणकहरः प्रलेपः | ,, |
| गुदपाकहर प्रलेपः | ,, |
| **पञ्चदशोऽध्यायः** | |
| मातुलुङ्गबीजप्रयोगः | २८० |
| मातुलुङ्गमूलघृतम् | ,, |
| लक्ष्मणामूलप्रयोगः | ,, |
| बलादिप्रयोगः | ,, |
| पलाशपत्रयोगः | २८१ |
| नागकेशरयोगः | ,, |
| मयूरशिखामूलयोगः | ,, |
| शिवलिङ्गीबीजप्रयोगः | ,, |
| सौभाग्यनन्दनघृतम् | ,, |
| वटशुङ्गदुग्धयोग. | २८२ |
| कुष्माण्डमूलादियोगः | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| नागकेशरादिदुग्धयोगः | २८३ |
| अश्वगन्धादुग्धम् | ,, |
| एरण्डबीजादियोगः | ,, |
| धातकीपुष्पादियोगः | ,, |
| भूस्तृणादलेपः | ,, |
| श्वेतबृहतीमूलयोगः | २८४ |
| फलघृतम् | ,, |
| अश्वगन्धाघृतम् | ,, |
| गर्भप्रदचूर्णम् | २८५ |
| वटशुङ्गदुग्धम् | २८५ |
| प्रजाकरं घृतम् | २८६ |
| **षोडशोऽध्यायः** | |
| मञ्जिष्ठाद्यं तैलम् | २८६ |
| कुङ्कुमाद्यं तैलम् | २८७ |
| मसूरप्रलेपः | २८७ |
| मुखसौन्दर्यकरो लेपः | २८८ |
| मुखकान्तिकरो लेपः | ,, |
| वदनकलङ्कहरो योगः | ,, |
| अङ्गराग. | ,, |
| मुखदौर्गन्ध्यहरी गुटिका | २२९ |
| गात्रदौर्गन्ध्यहरो लेपः | ,, |
| मलवातहरचूर्णम् | ,, |
| चूर्णदग्धप्रतिक्रिया | ,, |
| जात्यादिगुटिका | ,, |
| जातीपत्रादिलेहः | २९० |
| मपकुप्रतिक्रिया | ,, |
| व्यङ्गहरो लेपः | ,, |
| यौवनपिडिकाहरो लेपः | ,, |
| नीलिकाहरो योगः | ,, |
| मुखकार्ष्ण्यहरो लेपः | २९१ |
| गात्रकार्ष्ण्यहरः परिषेक. | २९१ |
| प्रतिसंस्कारसमाप्तिकाल. | २९१ |

ॐ

# "नावनीतकम्"

## सारदीपिकाख्यया हिन्दीभाषाटीकया समनूदितम्

## प्रथमोऽध्यायः ।

योगिगणार्चितचरणं भीषणभववारिधेस्तरणम् ।
मुरलीरुचिराभरणं हृन्मलहरणं महः शरणम् ॥ १ ॥
आत्रेयं शास्त्रतत्त्वप्रवचनचतुरं कायतन्त्रस्वतन्त्रं
राजर्षिं शल्यतन्त्रप्रकथनपदवीविश्रुतं सुश्रुताख्यम् ।
तन्त्रोपस्कारकारं मुनिमिह चरकं चैव शेषावतारं
ग्रन्थोपस्कारकार्यश्रमफलनधिया नौमि नम्रेण मूर्ध्ना ॥ २ ॥
ज्योतिःशास्त्रकलानिधेर्गुणनिधेः कारुण्यधारां निधेः
दैवज्ञैकशिरोमणेर्द्विजमणेः सद्धर्मयुक्तामणेः ।
जीवानन्दमहोदयस्य तु सरस्वत्याश्च मातुः पितुः
वन्देऽहं परया मुदा प्रतिपदं पादारविन्दद्वयम् ॥ ३ ॥

श्री कपर्दिने नमः ।

संस्कृतज्ञानशून्यानां भिषजां प्रतिपत्तये ।
क्रियते प्रतिसंस्कर्त्रा व्याख्येयं सारदीपिका ॥ १ ॥

योगि गणों से पूजित चरण वाली, भयङ्कर संसार सागर से पार करनेवाली नाव, हृदयमल हरिणी, तथा सुमधुर मुरली नामक आभूषण धारण करनेवाली दिव्य ज्योति ( अर्थात् श्री कृष्ण ) ही हमारा शरण ( रक्षा करनेवाली ) है। आयुर्वेदशास्त्र के गूढ़ तत्त्वों को निरूपण करने वाले तथा कायचिकित्सा के प्रधान प्रवक्ता, महर्षि आत्रेय, शल्यतन्त्र के प्रवचन करने में प्रसिद्ध राजर्षि सुश्रुत, तथा अग्निवेश संहिता के प्रतिसंस्कर्त्ता, शेषभगवान् के अवतार, और महामान्य मुनि चरक को इस ग्रन्थ के प्रतिसंस्कार की सफलता की कामना से नत शिर होकर नमस्कार करता हूँ।

ज्योतिःशास्त्र के कलानिधि, गुणनिधि, करुणावरुणालय, ब्राह्मणाग्रणी, सद्वंश के मुक्तामणि, तथा देवज्ञचूडामणि श्रीयुत परमपूज्य जीवानन्द नामक पिता, तथा सरस्वती नामक माता के चरण युगल में प्रतिपद प्रेमपूर्वक प्रणाम करता हू॥१-३॥

## प्रतिसंस्कर्तृप्रणीता ग्रन्थोपक्रमणिका–

क मे मतिर्मन्दगतिः क चेदं नावनीतकम्।
तितीर्षुरस्म्यहं मोहाद्बाहुभ्यां हि महार्णवम् ॥ ४ ॥
चरकादिभिराचार्यैः प्रागेव कृतवर्त्मनि।
अस्मिन् वा प्रतिसंस्कारे भविता सफलश्रमः ॥ ५ ॥

अल्पविज्ञान वाली कहा तो यह मेरी बुद्धि, और कहां यह अतिदूरूह नावनीतक नामक ग्रन्थ। इसलिए यह प्रतीत होता है कि (नावनीतक के प्रतिसस्कार करने मे) मै दो बाहुओं के सहारे अपार सागर को पार करना चाहता हू। किन्तु चरक प्रभृति आचार्यों के बताए हुए मार्ग से प्रतिसस्कार करने में मेरा श्रम अवश्य ही सफल होगा यह निश्चय है ॥ ४ ॥ ५ ॥

## प्रतिसंस्कारस्य प्रयोजनम्

त्रुटिताध्यायपद्यार्द्धपादपादांशसंयुतम्।
आर्षातिदुर्लभामोघयोगरत्नविभूषितम् ॥ ६ ॥
सुदुर्लभं ग्रन्थरत्नं विलोक्य नावनीतकम्।
क्रियते प्रतिसंस्कारो भिषङ्मङ्गलकाम्यया ॥ ७ ॥

ऋषि प्रणीत, प्राचीन, अत्यन्तदुर्लभ, तथा अचूक योग रत्नों से विभूषित, नावनीतक नामक सुदुर्लभ ग्रन्थरत्न को पद, पादांश, पाद, पद्य, योग, तथा कहीं अध्याय के रूप में त्रुटितांश देखकर वैद्यों के हित के लिए इसका यह प्रतिसस्कार किया जाता है ॥६॥७॥

नवाविष्कृतयोगाढ्यो नवतत्त्वविभूषितः।
कृतोऽयं प्रतिसंस्कारो ज्ञेयः स्वल्पविदामपि ॥ ८ ॥

नावनीतक के इस प्रति सस्कार में नवीनाविष्कृत योगों का भी समावेश किया गया है। कहीं २ नवीन रहस्य निरूपण किए हैं। इसे स्वल्पज्ञ भी पाठक (वैद्य) भली प्रकार समझ सकता है ॥ ८ ॥

आर्षतन्त्राण्यनेकानि पूर्वाण्यालोक्य यत्नतः।
पाठांशास्त्रुटितास्तस्य स्वबुद्ध्या च प्रपूरिताः ॥ ९ ॥

प्राचीन ऋषिप्रणीत अनेक ग्रन्थों को देखकर तथा कहीं अपनी बुद्धि से इस ग्रन्थ के त्रुटित अंशों को मैंने यथामति पूर्ण करदिया है ॥ ६ ॥

घिल्डियालोपसंज्ञेन सदानन्देन शर्म्मणा ।
क्रियते प्रतिसंस्कारः प्राचीनाचार्यसंमतः ॥ १० ॥

घिल्डियाल ( स्वजातिसंज्ञा ) उपनामक सदानन्द शर्मा ने इसका ऋषिमतानुमोदित यह प्रतिसंस्कार किया है ॥ १० ॥

प्राचीनमित्येव न महनीयं न नूतनमित्येव नितान्तदूष्यम् ।
हिताहिते तत्र परीक्ष्य सन्तः समाश्रयन्त्यन्यतरत्प्रकर्षम् ॥११॥

यह प्राचीन है, इसीलिए यह आदरणीय है, और यह नवीन है इसी कारण यह अत्यन्त अग्राह्य है, यह सिद्धान्त सर्वथा अनुचित है। क्योंकि विज्ञ पुरुष हिताहित का विचार करके किसी एक वस्तु को आदरणीय समझते हैं ॥ ११ ॥

सुजनश्चिनुते गुणान्, खलः खलु दोषानिह तन्त्रपाठकः ।
कमलानि मरालसत्तमो यत भेकोऽस्ति क्रिमीन् सरःस्थितः १२

शास्त्र का परिशीलन करते समय विज्ञ जन गुणों को, और मूर्ख दोषों को ग्रहण करता है। जैसे तालाब में रहने वाला हंस कमलों को, और मेंढक क्रिमियों को भक्ष्यरूप में लेता है ॥ १२ ॥

तन्त्रप्रतिपाद्यविषयोपक्रमणिका—

प्राक् प्रणीतैर्महर्षीणां सुश्रेष्ठैर्योगैः समन्वितम् ।
वक्ष्येऽहं तन्त्रनिष्कर्षं नाम्ना वै नावनीतकम् ॥ १३ ॥

मैं अत्रि, अग्निवेश, चरक, प्रभृति महर्षि प्रणीत प्राचीन सिद्ध ( अनुभूत ) योगों से युक्त आयुर्वेद के ग्रन्थ रत्नों का सारभूत नावनीतक नामक ग्रन्थ कहता हूँ। इस श्लोक में जो "वक्ष्ये" इस पद का प्रयोग किया है, उस से ग्रन्थ कर्ता का यह अभिप्राय सूचित होता है कि मैं ने इस ग्रन्थ को स्वरचित पद्यों से नहीं बनाया है, किन्तु आर्षवि महर्षियों के वचनों को उद्धृत कर इस ग्रन्थ को अनुदित किया है। यह बात भी सत्य ही है, क्योंकि आगे कहे जाने वाले लशुनादिचूर्ण प्रभृति योगों का पाठ चरक संहिता आदि प्राचीन ग्रन्थों से इस ग्रन्थ में अविकल समुद्धृत किया है ॥ १३ ॥

नानात्ययाधिपरीतानां नृणां स्त्रीणाञ्च यद्धितम् ।
कुमाराणां हितं यच्च तत्सर्वमिह वक्ष्यते ॥ १४ ॥

नाना प्रकार के रोगों से समाक्रान्त पुरुष, स्त्री, और बालकों के लिये जो २ लाभप्रद योग हैं, उन का इस में वर्णन किया जावेगा ॥ १४ ॥

**समासरतबुद्धीनामल्पत्वात्प्रीतिवर्द्धनम् ।**
**योगबाहुल्यतश्चैतद् हितं विस्तरवेदिनाम् ॥ १५ ॥**

चरक संहिता प्रभृति बृहत्काय ग्रन्थों की अपेक्षा अल्पकाय होने से संक्षिप्तज्ञान प्रेमी वैद्यों के लिये यह ग्रन्थ अत्यन्त उपादेय है । और चुने हुए अनुभूत योगों के आधिक्य के कारण विस्तरवेदियों के लिए भी लाभप्रद है ॥ १५ ॥

## अध्यायगत विषयानुक्रमणिका–

**अध्यायश्चूर्णयोगानां प्रथमोऽत्र प्रदर्शितः ।**
**द्वितीयो घृतयोगानां तृतीयस्तैलयोगवान् ॥ १६ ॥**

इस ग्रन्थ के पहिले अध्याय में चूर्णसञ्ज्ञक, दूसरे में घृतसञ्ज्ञक, और तीसरे अध्याय में तैलसञ्ज्ञक योगों का वर्णन किया जावेगा ॥ १६ ॥

**चतुर्थो मिश्रयोगाख्यो नानाव्याधिचिकित्सिते ।**
**पञ्चमो वस्तियोगानां षष्ठे चैव रसायनम् ॥ १७ ॥**

चतुर्थ अध्याय में अनेक रोगनाशक योगों का निरूपण होगा । पाचवें अध्याय में बस्तियोग, और छटे अध्याय में रसायन योगों का वर्णन किया जावेगा ॥ १७ ॥

**सप्तमश्च यवागूनां वृष्ययोगात्मकोऽष्टमः ।**
**नेत्राञ्जनानां नवमो दशमः केशरञ्जने ॥ १८ ॥**

सातवें अध्याय में यवागूसञ्ज्ञक योग और आठवें में वृष्ययोग कहे जावेंगे । नवम अध्याय में नेत्राञ्जन और दशम में केशरञ्जनकर योगों का समाख्यान होगा ॥ १८ ॥

**एकादशे ऽभयाकल्पः कथितो द्वादशे तथा ।**
**शिलाजत्कल्पः, कल्पश्च चित्रकस्य त्रयोदशे ॥ १९ ॥**

ग्यारहवें अध्याय में अभयाकल्प, बारहवें अध्याय में शिलाजतुकल्प, और तेरहवें अध्याय में चित्रककल्प वर्णन किया जावेगा ॥ १९ ॥

**कौमारभृत्ययोगाख्यस्तत्त्वध्यायश्च चतुर्दशः ।**
**तथा पञ्चदशेऽध्याये प्रोक्तं वन्ध्याचिकित्सितम् ॥ २० ॥**

चौदहवें अध्याय में कौमारभृत्य ( बाल चिकित्सा ) और पन्द्रहवें अध्याय में वन्ध्याचिकित्सा कही जावेगी ॥ २० ॥

तथा षोडशके ऽध्याये सुभगानां चिकित्सितम् ।
इत्येते षोडशाध्याया विज्ञेया नावनीतके ॥ २१ ॥

सोलहवें अध्याय में सुभगाचिकित्सा का वर्णन होगा। इस नावनीतक नामक ग्रंथ में निर्दिष्ट विषयवाले केवल सोलह अध्याय हैं ॥ २१ ॥

## अस्य ग्रन्थस्य अधिकारी

नेदं दद्यादपुत्राय न चाप्यशिष्य कथञ्चन ।
प्रस्तावो नास्य चाशिष्टे कर्तव्य इति मे मतिः ॥ २२ ॥

इस ग्रन्थ को पुत्रविहीन, भ्रातृविहीन, तथा अशिष्ट पुरुष को न पढ़ावे, यह मेरी सम्मति है, क्यों कि ऐसे पुरुषों को पढ़ाने से इस ग्रन्थ का प्रचार नहीं होगा ॥ २२ ॥

## अथ तालीसादिचूर्णम्—

तालीसपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धास्त्वगेले चार्द्धभागिके ॥ २३ ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
अखिलं तु पृथक् सर्वं चूर्णयेदतियत्नतः ॥ २४ ॥
वस्त्रपूतं ततः कृत्वा काचकुप्यां विनिक्षिपेत् ।
चूर्णमेतन्मतं नाम्ना तालीसादिसमाह्वयम् ॥ २५ ॥
कासश्वासारुचिहरं चूर्णं वै दीपनं परम् ।
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम् ॥ २६ ॥
छर्द्यतीसारगुल्मघ्नं मूढवातानुलोमनम् ।
मधुना शीलयेच्चूर्णं कासवेगे पुनः पुनः ॥ २७ ॥

तालीसादिचूर्ण । तालीसपत्र एक भाग, कालीमिर्च दो भाग, सोंठ तीन भाग, पिप्पली चार भाग, वंशलोचन पांच भाग, दालचीनी तथा छोटी इलायची प्रत्येक अर्द्धभाग, खांड आठ भाग ले। खांड को छोड़ कर सब औषधों को पृथक् पृथक् महीन कूट ले। तदनन्तर उन्हें अलग अलग कपड़छन कर कांचकूपी (बोतल या शीशी) में डाल दे। इस चूर्ण का नाम तालीसादि चूर्ण है। यह कास, श्वास, अरुचि रोगों को दूर करता है। यह अत्यन्त क्षुधावर्द्धक है। हृद्रोग, पाण्डु, ग्रहणी, शोष, प्लीहा, तथा ज्वर का नाशक है। यह चूर्ण वमन, अतीसार तथा गुल्म को दूर करता है। मूढ़ वात को अनुलोमन करता है। इस चूर्ण को खांसी की प्रबलावस्था में बार २ मधु में चाटना चाहिए ॥ २३—२७ ॥

## यवानीखाण्डवचूर्णम्—

यवानीं तिन्तिडीकं च नागरं त्वम्लवेतसम् ।
दाडिमं बदरञ्चाम्लं कार्षिकाण्युपकल्पयेत् ॥ २८ ॥
धान्यसौवर्चलाजाजीवराङ्गञ्चार्धकार्षिकम् ।
पिप्पलीनां शतं त्वेकं द्वे शते मरिचस्य च ॥ २९ ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं मरुरोचनम् ॥ ३० ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ ३१ ॥
चूर्णमेतत्समाख्यातं यवानीखाण्डवाभिधम् ।
पूर्णमात्रा मता चास्य माषकत्रयसंमिता ॥ ३२ ॥

यवानीखाण्डवचूर्ण । अजमायन, तिन्तिडीक, सोंठ, अमलवेत, अनारदाना, खट्टे बेर, ये सब प्रत्येक दो तोले, ले । धनियां, सचर लवण, जीरा, दालचीनी, प्रत्येक एक एक तोले लेवे । एक सौ पीपल, और दो सौ काली मिरच के दाने । चीनी ४ पल (अर्थात् बत्तीस तोले) ले । इन सब को पृथक् २ कूट कर चूर्ण बनाले । यह चूर्ण जिह्वा का शोधक है । हृद्य (हृदय को हित) है । भोजन करने की रुचि बढ़ाता है । इस चूर्ण के सेवन करने से हृच्छूल, प्लीहशूल ( तिल्ली की पीडा ) तथा पार्श्वशूल नष्ट होता है । मलमूत्रबन्ध, तथा आनाह नाशक है । खांसी और श्वास में विशेष लाभकारी है यह संग्राही है संग्रहणी तथा बवासीर को दूर करता है । इस चूर्ण को यवानीखाण्डव नाम से निर्देश करते हैं । इस की पूर्णमात्रा तीन मासे है । यह कफ प्रधान अरुचि में विशेष हितकारी है ॥ २८—३२ ॥

## अथ गुडदाडिमाद्यवलेहः

गुडदाडिममृद्वीकापिप्पलीविश्वभेषजम् ।
मातुलुंगरसक्षौद्रैर्लीढं श्वासनिबर्हणम् ॥ ३३ ॥

गुडदाडिमाद्यवलेह । गुड, अनारदाना, दाख, पीपल, सोंठ इन सब को कूटकर मातुलुंग के रस, तथा मधु के साथ चाटने से श्वास दूर हो जाता है ॥ ३३ ॥

## अथ लाजादिचूर्णम्

लाजपाठाकुष्ठघनाश्वाञ्जनं पिप्पलीकणः ।
शिरीषपुष्पस्वरसैर्युक्तः श्वासहरः परः ॥ ३४ ॥

लाजादिचूर्ण । धान की खील, पाठा, सूंठ, मोथा, अञ्जन, और पिप्पली का चूर्ण शिरीष के फूलों के स्वरस के साथ सेवन करने से श्वास को नष्ट करता है ॥३४॥

## अथ मधुयष्टिकाद्यवलेहः

मधुकं मरिचं भार्गी मृद्वीका पुष्करागुरु ।
मधुसर्पिर्युतो लेहो हिक्काश्वासनिवारणः ॥ ३५ ॥

मधुयष्टिकाद्यवलेह । मुलहठी, काली मिरच, भारगी दाख, पुहकर मूल, और अगुरुकाष्ठ, इन सब को कूटकर चूर्ण बना ले । तदनन्तर मधु तथा घृत के साथ इस चूर्ण को मिलाकर चाटे इस लेह के सेवन करने से हिचकी तथा श्वास दूर हो जाता है ॥ ३५ ॥

## अथ मयूरपिच्छभस्मादिलेहः

शिखिपिच्छं रुरोः शृङ्गं सम्पुटस्थं दहेद्भृशम् ।
भस्मद्वयमिदं श्वासी लिह्यात्सुमधुसर्पिषा ॥ ३६ ॥

मयूरपिच्छभस्मादिलेह । मोर के पत्त, तथा हरिण के शृङ्ग को सम्पुट में रख कर तीव्र आंच देकर भस्म करले । यह भस्म मधु और घी के साथ सेवन करने से श्वास दूर करता है ॥ ३६ ॥

## अथ विद्रुमभस्मादिलेहः

प्रवालशङ्खत्रिफलाचूर्णं मधुघृताप्लुतम् ।
पिप्पलीगैरिकञ्चैव लेह्यं हिक्कानिवारणम् ॥ ३७ ॥

अथ विद्रुमभस्मादिलेह । मूगा भस्म, शङ्ख भस्म, तथा त्रिफला चूर्ण को मधु और घी के साथ लेह बनाकर चाटने से हिचकी आना बन्द हो जाता है । इसी प्रकार विशुद्ध गैरिक और पिप्पलीचूर्ण मधु के साथ चाटने से हिचकी आना रोक देता है ॥ ३७ ॥

## अथ शणबीजादिलेहः

शणबीजं प्रवालं च गैरिकञ्चैव लेहयेत् ।
हिक्काश्वासनिवृत्त्यर्थं खरोष्ट्राश्वास्थिभस्म च ॥ ३८ ॥

शणबीजादिलेह । शण के बीज, मूगा भस्म, तथा विशुद्ध गेरिक इन तीनों को मधु के साथ चाटने से हिचकी तथा श्वासरोग निवृत्त होजाता है । इसी प्रकार

गधा, ऊंट, तथा घोड़े की हड्डी की भस्म को मधु के साथ चाटने से हिक्का तथा श्वास नष्ट हो जाता है ॥ ३८ ॥

## अथ एरण्डतैलयोगः

पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम्।
हिक्काश्वासनिवृत्त्यर्थं स्निग्धः संशोधनं पिबेत् ॥ ३९ ॥

एरण्डतैलयोग। हिचकी और श्वास को हटाने के लिए वारुणीमण्डमिश्रित एरण्डतैल का पान करे। अथवा स्नेहपान करके किसी अन्य विरेचक औषध का सेवन करे। क्योंकि विरेचन के प्रयोग से वायु विगुणावस्था छोड़कर अनुलोमावस्था में चला जाता है ॥ ३९ ॥

## अथ सितोपलादि चूर्णम्

सितोपलां तुगाक्षीरीं पिप्पलीं बहुलां त्वचम्।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥ ४० ॥
चूर्णितं प्राशयेच्चैतच्छ्वासकासकफातुरम्।
सुप्तजिह्वारोचकिनं मंदाग्निं पार्श्वशूलिनम् ॥ ४१ ॥
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्द्ध्वगे।
सितोपलाद्यं नाम्नेदं चूर्णं जीर्णज्वरापहम् ॥ ४२ ॥

सितोपलादिचूर्ण। मिश्री, वंशलोचन, पिप्पली, छोटी इलायची तथा दालचीनी को अन्त्य से पूर्व वस्तुओं को उत्तरोत्तर दूना लेवे। अर्थात् दालचीनीसे इलायची, इलायची से पिप्पली, पिप्पली से वंशलोचन, और वंशलोचन से दूनी मिश्री लेवे। इस चूर्ण को सहद और घी के साथ चाटे। इस चूर्ण के सेवन करने से श्वास, कास, जिह्वास्तम्भ, अरुचि, मन्दाग्नि, तथा पार्श्वशूल नष्ट होता है। यह चूर्ण हाथ, पैर तथा सारे शरीर के दाह को ज्वर तथा उर्द्ध्वग रक्तपित्त को दूर करता है॥ इसका नाम सितोपलादि चूर्ण है। यह विशेषतया जीर्णज्वर नाशक है ॥ ४०—४२ ॥

## अथ शट्यादिकं चूर्णम्

शटीपुष्करजीवन्तीचोरकागुरुनागरम्।
भूधात्रीतुरसैलाम्बुत्वक्कणामुस्तकं समम् ॥ ४३ ॥
सञ्चूर्ण्य चूर्णमेतत्तु दत्वाऽष्टगुणशर्करम्।
सर्वथा तमके श्वासे हिक्कायां च प्रयोजयेत् ॥ ४४ ॥

पार्श्वशूलप्रशमनं तथा हृच्छूलनाशनम् ।
कासापहं च परमं समाख्यातं भिषग्वरैः ॥ ४५ ॥

शट्यादिकचूर्ण । कचूर, पुष्करमूल, जीवन्तीमूल, चोरक, अगुरु, सोंठ, भूमि आवला, तुलसी, इलायची, सुगन्धबाला, दालचीनी, पिप्पली, तथा मोथा इन सब को सम परिमाण में लेकर कूट ले । तदनन्तर चूर्ण से अठगुनी चीनी मिलाकर रखले । तमक ( दमा नामक ) श्वास, तथा हिक्का में इस का प्रयोग करे । यह चूर्ण विशेषतया पार्श्वशूल, हृच्छूल तथा कास को नष्ट करता है ॥ ४३—४५ ॥

## अथ हिङ्ग्वादिचूर्णम्

हिंगु त्रिकटुकं पाठां हबुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥ ४६ ॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥ ४७ ॥
चूर्णमेतत्प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥ ४८ ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफोल्वणे ।
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ ॥४९॥
उरोविबन्धे कासे च हिक्काश्वासे गलग्रहे ।
आनाहे मूत्रकृच्छ्रे च शूले च गुदयोनिजे ॥ ५० ॥
चूर्णमेतत्समाख्यातं नाम्ना हिङ्ग्वादिसंज्ञकम् ।
पूर्णमात्रा मता चास्य माषकद्वयसंमिता ॥ ५१ ॥

हिङ्ग्वादिचूर्ण । हींग, सोंठ कालीमिरच, पीपल, पाठा, हाऊबेर, हरड़, कचूर, अजमोद अजवायन, तितिड़ीक, अमलवेत, दाडिम के बीज ( अर्थात् अनारदाना ), धनिया, जीरा, चीता, वच, दोनों क्षार [ "स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतमिति रसतरङ्गिणी" । सज्जीखार और जवाखार क्षारद्वय (दोनों क्षार) कहे जाते हैं ] दोनों नमक और चव्य इन सब को समान भाग में लेकर कूट चूर्ण बनाले । इस चूर्ण को भोजन के साथ, अथवा अन्य किसी वस्तु के साथ सेवन करना चाहिये । इसमें किसीप्रकार की रुकावट नहीं है । अथवा इस चूर्ण को भोजन करने से पहिले मद्य वा उष्ण जल से सेवन करे । इस चूर्ण के सेवन करने से पार्श्वशूल, हृदयशूल, बस्तिशूल,

वातस्फोल्वण गुल्म, समग्रहणी, बवासीर, तिल्ली, पाण्डुरोग, अरुचि, उरोविबन्ध, कास, श्वास, गलग्रह, आनाह, मूत्रकृच्छ्र, गुदशूल तथा योनिशूल प्रभृति रोग दूर होते हैं। इस चूर्ण का नाम हिङ्ग्वादिचूर्ण है इस की मात्रा दो मासे है ॥ ४६–५१ ॥

## अथ हिङ्ग्वादिवटिका

भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुटिकाः कार्या कार्मुकाः स्युस्ततोऽधिकम् ॥ ५२ ॥
हिङ्ग्वादिवटिका नाम्ना समाख्याता भिषग्वरैः ।
वातानुलोमनायेमा प्रयोक्तव्या विशेषतः ॥ ५३ ॥

हिङ्ग्वादिवटिका। पूर्वोक्त चूर्ण (हिङ्ग्वादिचूर्ण) को बिजोरेके स्वरस के साथ घोटकर गोलियां बनाले। ये गोलियां चूर्ण की अपेक्षा अधिक गुण दिखाती हैं। इन गोलियों का नाम हिङ्ग्वादिवटिका है। कोष्ठस्थ विगुण वात को अनुलोमन करने के लिए इन गोलियों को विशेष रूप से प्रयोग करना चाहिए ॥ ५२—५३ ॥

## अथ लगुड चूर्णम्

कटुत्रिकं तिक्तकरोहिणी घनं
　　किराततिक्तोऽथ शतक्रतोर्यवा ।
ससप्तपर्णातिविषा दुरालभा
　　सत्रायमाणा तु पटोलपत्रम् ॥ ५४ ॥
विडङ्गचव्यं सगुडूचि निम्बकं
　　प्रियंगुनीलोत्पलरोध्रमञ्जनम् ॥
सधातकी मोचरसं फलत्रिकं
　　तथा नवं बिल्वकपित्थसारिवम् ॥ ५५ ॥
समाः स्युरेते द्विगुणं तु चित्रकाद्
　　द्विरष्टभागं कुटजत्वचस्तथा ।
सुसूक्ष्मपिष्टं शिशिराम्बुसंयुतं
　　पिबेत्तु चूर्णं गुणमाषकोन्मितम् ॥ ५६ ॥
निषेवितं चूर्णमिदं निहन्ति
　　महातिसारं ग्रहणीमजीर्णम् ।
ज्वरं प्रमेहं श्वयथूनरोचकं
　　हासद्वेजा गुल्ममथापि पाण्डुताम् ॥ ५७ ॥

अन्ये च ये पित्तकफानुबन्धा
रोगा नराणां भृशमातुराणाम् ।
सर्वाञ्जयेच्चूर्णमिदं प्रयुक्तं,
मात्रेयजुष्टं लगुडाख्यमग्र्यम् ॥ ५८ ॥

कटुत्रिकाद्यचूर्ण । सोंठ, काली मिर्च, पीपल, कुटकी, मोथा, चिरायता, इन्द्र जौ, समन्दर, अतीस, धमासा, पटोलपत्र, त्रायमाणा, वायविडङ्ग, पाठा, गिलोय, नीम प्रियङ्गु, नील कमल, अञ्जन लोध, धाय के फूल, मोचरस, हरड़, बहेड़ा आंवले, बेलगिरी, मैंथ फल, तथा अनन्तमूल, इन सब औषधों को समान भाग ले। चित्रक को द्विगुण लेवे। कूड़े की छाल को १० दश भाग लेवे। इन सब औषधियों को पृथक् २ कूट कपड़ छानकर चूर्ण बनाले। तदनन्तर इस चूर्ण को ठंडे पानी से पी लेवे। इस चूर्ण की मात्रा तीन मासे है। इस चूर्ण के सेवन करने से प्रबल अतिसार, संग्रहणी, अजीर्ण, ज्वर, प्रमेह, शोथ, अरोचक, रक्तप्रदर, गुल्म, तथा पाण्डुरोग नष्ट हो जाता है ॥ व्याधि पीड़ित मनुष्यों के और भी जो पित्तज अथवा कफज रोग होते हैं, उन सब को यह चूर्ण नष्ट करदेता है। इस चूर्ण का प्रयोग आत्रेय महर्षि ने किया है। इस चूर्ण का नाम लगुड़ चूर्ण है ॥ ५४—५८ ॥

## अथ नवायसचूर्णम्

त्रिफलायास्त्रयो भागा भागास्त्रिकटुकात् त्रयः ।
चित्रमुस्ताविडङ्गानां त्रयस्त्वेव चायसात् ॥ ५९ ॥

नवायसमिदं चूर्णं पाण्डुश्वयथुरोगनुत् ।
मात्रा चास्य समाख्याता रक्तित्रयमिता शुभा ॥ ६० ॥

जीर्णज्वरहरश्चैतद्धातरक्तप्रणाशनम् ।
यष्टदोषसमुद्भूतानां प्रभूतां रुधिरालयताम् ॥ ६१ ॥

ओजोमेहं महाघोरं नाशयत्यविलम्बितम् ।
यष्टद्रोगसमायुक्तं मेहं हन्ति विशेषतः ॥ ६२ ॥

नवायसचूर्ण । हरड़, बहेड़ा, आमला प्रत्येक एक भाग, सोंठ, काली मिर्च पीपल प्रत्येक एक भाग, तथा चीता, मोथा, वायविडङ्ग प्रत्येक एक भाग ले। इन औषधों के बराबर लोहभस्म ले। तदनन्तर इन सबों का एकत्र करके कपड़छान कर

उत्तम शतपुटित लोहभस्म मिलाकर चूर्ण बनाले। यह चूर्ण पाण्डु तथा शोथ रोग में विशेष गुणकारी है। इस चूर्ण की तीन रत्ती की मात्रा है। इस चूर्ण के सेवन करने से जीर्णज्वर तथा वातरक्त दूर होता है। यकृद्दोषजनित देह की रुधिराल्पता के लिए यह अव्यर्थ महौषध है। मूत्रगत ओजस्राव को यह विशेषरूप से रोकता है। यकृद्दोष संयुक्त प्रमेह रोग में विशेष रूप से गुण दिखाता है॥ ५९—६२॥

## अथ लाक्षादिचूर्णम्

लाक्षां ससौवर्चलभद्रमुस्ता-
मागारधूमं कटुकत्रिकं च।
क्षारो यवानां च शटी समेषां,
भागाः समाश्चूर्णकृता विधेया.॥ ६३॥
सञ्चूर्णयेच्चूर्णमिदं तु नाम्ना
लाक्षादिकं कीर्तितमामयज्ञैः।
क्षौद्रेण युक्तं खलु चूर्णमेत-
न्निहन्ति रोगान् गलदन्तजातान्॥ ६४॥

लाक्षादिचूर्ण। लाख, सौंचलनमक, भद्रमोथा, घर का धुआ, सोंठ, कालीमिर्च, जवाखार, कचूर, इन सबको समान भाग में लेकर कूट कपड़छानकर चूर्ण बनाले। इस चूर्ण का नाम लाक्षादि चूर्ण है। इस चूर्ण को शहद के साथ सेवन करने से कण्ठ तथा दन्तवेष्टगत रोग दूर होते हैं॥ ६३—६४॥

## अथ रसाञ्जनादि गुटिका

रसाञ्जनं दारु निशा वचाभया,
सगैरिकं तेजवती सपिप्पली।
समानि कुर्यात्तुलितानि बुद्धिमा-
ञ्जलेन पिष्ट्वा गुटिकास्तु कारयेत्॥ ६५॥
वैस्वर्यदौर्गन्ध्यजडत्वजिह्वा,
प्रलेपपैच्छिल्यगलास्यरोगान्।
निहन्ति रक्तं मुखपाक माशु
रसाञ्जनाद्या गुडिका प्रयुक्ता॥ ६६॥

**रसाञ्जनादिगुटिका ।** रसौंत, दारुहलदी, वच, हाड, गैरिक, तेजबल की छाल, और पीपल। इन सब औषधों को समान भाग में लेकर कूट कपड़ छान कर चूर्ण बनाले । तदनन्तर इस चूर्ण को पानी से पीस कर वटिका बनाले । इन वटिकाओं के प्रयोग से स्वरभङ्ग, मुखदौर्गन्ध्य, जिह्वाकी जड़ता, तथा मललिप्तता, मुखपैच्छिल्य, प्रभृति कण्ठगत, तथा मुखगत रोग दूर होजाते हैं। ये गोलियां दांतों से खून गिरने तथा मुखपाक में विशेषतया गुण दिखाती हैं । इन गोलियों का नाम रसाञ्जनादि गुटिका है ॥ ६४—६६ ॥

## अथ अयोरजीयचूर्णम् ।

त्रिफलायास्तु कुडवं पिप्पल्याः कुडवं तथा ।
विडङ्गमरिचाभ्यां च द्वे पले तु समावपेत् ॥ ६७ ॥
पलं पलं प्रकुर्वीत दन्तीचित्रकयोरपि ।
गुडूची पिप्पलीमूलकुष्ठानाञ्च पलं पलम् ॥ ६८ ॥
शृङ्गवेरात्पले द्वे तु वच्यात्पञ्च पलानि च ।
शेषाण्यर्धपलानि स्युर्यानि तानि निबोधत ॥ ६९ ॥
रास्ना बला गोक्षुरकं मधुकं देवदारु च ।
वचा प्रतिविषा पाठा मुस्तकं कटुरोहिणी ॥ ७० ॥
कट्फलं शारिवे द्वे च श्यामा भल्लातकानि च ।
पुनर्नवा तेजवती त्वचं पद्मं शतावरी ॥ ७१ ॥
क्षुद्रा व्याघ्रनखं चैव मञ्जिष्ठा कूटशाल्मलिः ।
निचुलं त्रिवृता भार्गी कुटजस्य फलं त्वचम् ॥ ७२ ॥
एतदौषधसंभारं सूक्ष्मचूर्णं तु कारयेत् ।
यावदेतद्भवेच्चूर्णं द्विगुणं स्यादयोरजः ॥ ७३ ॥
तदेकत्र कृतं गुप्तया काचकुप्यां तु विन्यसेत् ।
रक्तिद्वयमिता मात्रा लेहयेन्मधुसर्पिषा ॥ ७४ ॥

अयोरजीयचूर्ण । त्रिफला चार पल, पिप्पली चार पल, विडङ्ग एक पल, और कालीमिरच एक पल लेवे ॥ दन्तीमूल तथा चित्रकमूल को भी पृथक् एक एक पल-परिमित ले । गिलोय, पीपलामूल, और कूठ इन को पृथक् पृथक् पल परिमित ग्रहण करे ॥ सोंठ दो पल, और चव्य पांच पल ले । शेष औषधियों को जिन्हें हम आगे लिखरहे हैं, वे सब अलग अलग आधापल लेनी चाहिए ॥ रास्ना, खरैटी, गोखरू,

मुलहठी, देवदार, वच, अतीस, पाठा, नागरमोथा, कुटकी, मायफल, अनन्तमूल, श्यामालता, श्यामा, भिलावे, पुनर्नवा, तेजबल, दालचीनी, तज, शतावर, छोटी कंटकारी, व्याघ्रनख, मजीठ, कृष्णशाल्मलि ( एक प्रकार का सेमर का भेद ) निचुल निशोथ, भारंगी, कूडे की छाल, तथा इन्द्र जौ इन सब औषधों को आधा आधा पल परिमित लेवे। इन सब औषधों को कूट कपड़ छानकर चूर्ण बना कर रखले। तदनन्तर इन सब औषधियों के चूर्ण से दूना उत्तम लोहभस्म ले। इन सब को खूब मिलाकर काच कुपी में रखदे। इस चूर्ण की मात्रा दो रत्ती है। इस चूर्ण को शहद और घी के साथ सेवन करना चाहिए। अर्थात् इस चूर्ण का सहत और घी सहपान है ॥ ६७—७४ ॥

क्षीरं चानुपिबेद् शोफी निरन्नः क्षीरसेविता।
प्रयोगादस्य नियतं जायते विगतव्यथः ॥ ७५ ॥
अयोरजीयमित्येतत्ख्यातं सिद्धं रसायनम।
संवत्सरप्रयोगेण शतं वर्षाणि जीवति ॥ ७६ ॥
निहन्ति श्वयथुं चोग्रं वृत्रमिन्द्राशनिर्यथा।
पाण्डुरोगमथार्शांसि मन्दाग्निं क्रिमिकोष्ठताम् ॥ ७७ ॥
भगन्दरं कामलां च कुष्ठानि जठराणि च।
प्लीहगुल्ममपस्मारं शूलं च परिकर्तिकाम् ॥ ७८ ॥
यस्मिन् यस्मिन् विकारे तु चूर्णमेतत्प्रयुज्यते।
तं तं विकारं हन्तीह देवारीन् केशवो यथा ॥ ७९ ॥
अनुप्रयोगो लाजानां सक्तवो मधुसंयुताः।
क्षीरानुपाना लेह्याः स्युः सप्ताष्टौ दिवसानि तु ॥ ८० ॥

इस चूर्ण को खा कर दुग्ध को अनुपान के रूप से सेवन करे। यदि शोफपीडित मनुष्य अन्न त्यागकर, केवल दुग्धाहारी बनकर इस चूर्ण का सेवन करे तो अवश्य ही वह उक्त रोग से निर्मुक्त होजावगा। इस चूर्ण का नाम अयोरजीय चूर्ण है। और यह अनुभूत रसायन है। इस चूर्ण को एक साल तक सेवन करने से पुरुष सौ वर्ष तक जीवित रहता है। यह बड़े भयङ्कर शोथ ( सोजा ) को भी नष्ट कर देता है जैसे बिजली वृक्ष को जला देती है। इस चूर्ण के सेवन करने से पाण्डुरोग, बवासीर, अग्निमान्द्य तथा क्रिमिरोग दूर होजाता है। भगन्दर, कामला, अठारह प्रकार के कुष्ठ, उदररोग, प्लीहरोग, गुल्म, अपस्मार ( मिरगी ) शूल, परिकर्तिका प्रभृति विविध रोगों

को यह चूर्ण दूर करता है। जिस जिस भी रोग में यह मयोरजीय नामक चूर्ण प्रयुक्त किया जाता है उस उस रोग को ऐसा नष्ट करता है जैसे इन्द्र का वज्र दैत्यों का विनाश करता है। इस चूर्ण के प्रयोग के अनन्तर कम से कम सात आठ दिन तक केवल लाजाओं का सेवन करना चाहिए। अथवा सहत संयुक्त सत्तुओं का सेवन करे। इस पथ्य के अनन्तर दूध को पीवे। या लेह्य वस्तु जो कि मृदुपाच्य हों उनका सेवन करे ॥ ७५—८० ॥

## अथ तिक्तकचूर्णम्

मुस्तैलाचन्दनोशीरं यवानी व्योषवत्सकौ ।
फलत्रिकं त्वक् कटुकी दारु दार्वी च पर्पटः ॥ ८१ ॥
पटोलनिम्बपड्ग्रन्थामूर्वाभूनिम्बशिग्रुकाः ।
त्रायमाणा च सौराष्ट्री मुरा प्रतिविषा समाः ॥ ८२ ॥
तिक्तकं नाम हृद्गुल्मशूलघ्नं सन्निपातनुत् ।
चूर्णमेतत्समाख्यातं विशेषाज्ज्वरनाशनम् ॥ ८३ ॥

*तिक्तकचूर्ण* । नागरमोथा, रक्तचन्दन, खस, अजवायन, सोंठ, कालीमिरच, पीपला, कूड़े की छाल, हरड़, बहेड़ा, आंवला, कडुकी, दालचीनी, देवदारु, दारुहलदी, पित्तपापड़ा, पटोलपत्र, नीम, बच, मूर्वा, चिरायता, सुहाजनने की छाल, त्रायमाण, जलपीपल, मुरा, तथा अतीस इस सब द्रव्यों को समान परिमाण में लेकर अलग अलग कूट कपड़ छानकर चूर्ण बनाले। इस चूर्ण का नाम तिक्तक है। इस चूर्ण के सेवन करने से हृद्रोग गुल्म शूल तथा सन्निपात नष्ट होता है। यह चूर्ण ज्वर में विशेषतया गुण दिखाता है ॥ ८१—८३ ॥

## अथ षुपद्वादशकचूर्णम्

पिप्पल्यतिविषा हिंगु नागरेन्द्रयवा वचा ।
पाठाजमोदाकटुकाभयासौवर्चलवृषाः ॥ ८४ ॥
समांशिकमिदं सर्वं चूर्णीकृत्य प्रयोजितम् ।
वृषद्वादशकं चूर्णमजीर्णाध्मानशूलनुत् ॥ ८५ ॥

*वृषद्वादशकचूर्ण* । पिप्पली, अतीस, हींग, सोंठ, इन्द्रजौ, बच, पाठा, अजमोद, कडुकी, हरड़, सौवर्चलनमक, और अडूसे की छाल, इन सब औषधों को समान

परिमाण में लेकर कूट कर चूर्ण बनाले। इस चूर्ण का नाम वृषद्वादश चूर्ण है। इसके सेवन करने से अजीर्ण, आनाह, तथा शूल नष्ट होजाते हैं॥ ८४—८५॥

## अथ सिद्धार्थिका गुटिका

मागध्याः कुडवः स्यान्मरिचादपि कुडवस्तथा देयः।
शुण्ठ्याः पलानि षट्स्युः पञ्च च तालीसपत्रस्य॥ ८६॥
सूक्ष्मैलाया कर्षौ गुडस्य दद्याद्विपक् तथार्द्धतुलाम्।
एतच्चूर्णं कृत्वा गुटिकास्तोलकमिताः कुर्यात्॥ ८७॥
कासं श्लेष्मोद्रेकं भक्तस्यारोचकं विषममग्निम्।
शमयत्यजीर्णमनिशं गुटिका सिद्धार्थिका नाम्ना॥ ८८॥

सिद्धार्थिका गुटिका। पीपला एक कुडवपरिमित, और कालीमिरच कुडव ले। सोंठ ६ पल और तालीसपत्र पांच पल लेवे। छोटी इलायची एक कर्ष परिमित ले। इस में अर्द्धतुला ( ५० पल ) गुड का प्रक्षेप कर। इन पूर्वोक्त औषधियों को कूट कपडछानकर चूर्ण बनाले। तदनन्तर उक्तपरिमाण में गुड डालकर एक एक तोले की गोली बनाले॥ ८६—८७॥

इन गोलियों के सेवन करने से खांसी, कफ का प्राबल्य, अन्न में अरुचि, विषमाग्नि ( कभी अन्न का पचजाना, कभी न पचना ) रोग, तथा अजीर्ण नष्ट होजाता है। इन गोलियों का नाम सिद्धार्थिका गुटिका है॥ ८८॥

## अथ समशर्करचूर्णम्

एलात्वक्दलनागपुष्पमरिचं स्यात्पिप्पलीनागरं
एलाभागविवर्द्धितैः समघृतैश्चूर्णैः समा शर्करा।
एतच्चूर्णमजीर्णगुल्मजठरेष्वर्शःसु हृद्रोगिषु
हिक्काश्वासिषु पार्श्वशूलिषु हितं कण्ठविकाराश्च ये॥ ८९॥
समाख्यातमिदं चूर्णं समशर्करसंज्ञकम्।
वर्द्धमानकसंज्ञं च कैश्चिदेतत्प्रकीर्त्तितम्॥ ९०॥
चूर्णमात्रा मता चास्य तोकार्द्धमिता शुभा।
चूर्णमेतद्विशेषेण कोष्ठामयविनाशनम्॥ ९१॥

**समशर्कर चूर्णम्।** छोटी इलायची, दालचीनी, तज, नागकेशर, कालीमिरच, पीपला, तथा सोंठ इन सब औषधियों को ( इलायची से सोंठ तक ) क्रमसे द्वि-

अल्पवीर्य, क्षीण तथा उरःक्षतादियुक्त रोगियों के लिए इसका प्रयोग हितकर है। इस घृत को समान सत्तू (जौकासत्तू) मिलाकर खाना चाहिए। सत्तू मिलाकर घृत का प्रयोग करना प्राचीन काल में विशेषतया प्रचलित था। वर्तमान काल के लिए इस का सदुपान हम आगे लिखते हैं॥

### द्राक्षाघृतकी मात्रा

इस घृत की मात्रा तीन मासे से लेकर दो तोले तक की है। मनुष्य का बलाबल, तथा शीतोष्णात्मक काल को विचार कर मात्रा का निर्धारण करना चाहिए। इस घृत को, आध सेर, अथवा पावभर गाय के गरम दूध से मिश्री मिलाकर सेवन करना चाहिए। क्षतयुक्त, तथा क्षीण मांसवालों को स्वस्थावस्था में लाने की इच्छा से विज्ञ वैद्य इस घृत को दिन में दो बार भोजन से पहिले प्रयोग करावे॥८५-९३॥

### अथ रासायनिकं घृतम्।

पञ्चमूलमथो ह्रस्वं गुडूचीं मधुकं बला।
पलिकानि तु सर्वाणि समाहृत्य तु कुट्टयेत्॥ ९४॥
पाचयेत्तु जलद्रोणे चतुर्भागावशेषितम्।
तत्कषायं तु संगृह्य घृतप्रस्थं विपाचयेत्॥ ९५॥
गर्भे च जीवनीयानां दद्यात्क्षीरं चतुर्गुणम्।
विदार्यामलकानां च तथैवेक्षुरसस्य च॥ ९६॥
दत्त्वा घृतसमान् भागान् पचेत्तु मृदुनाग्निना।
शीतीभूते पलमितं दापयेत्तु त्रिजातकम्॥ ९७॥
रासायनिकमित्येतत्पेयं सर्पिः क्षयापहम्।
हृद्रोगक्षतकासानां ज्वराणां च प्रणाशनम्॥ ९८॥
शाखाश्रितं कोष्ठगतं तथा जत्रुर्ध्वभागगम्।
पित्तं प्रशमयत्याशु रासायनिकमाज्यकम्॥ ९९॥

### अस्य घृतस्य मात्रा—

माषत्रयात्समारभ्य तोलकार्द्धमिता परम्।
वैद्यानुमोदिता मात्रा रासायनिकसर्पिषः॥ १००॥
एतेन गव्यपयसाससितेन घृतं त्विदम्।
वारद्वयं प्रतिदिनं भोजनादौ प्रयुज्यते॥ १०१॥

## रासायनिकघृत

लघुपञ्चमूल ( लघुपञ्चमूल की यह परिभाषा है—"*शालिपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरैः। पञ्चमूल समाख्यात लघुपूर्वं भिषग्वरैः।*" शालिपर्णी, पृश्निपर्णी, छोटी कटेरी, बडी कटेरी, और गोखरू, इन पाच औषधियों के मूलों को लघुपञ्चमूल कहते हैं ) गिलोय, मुलहठी, तथा खरेटी इन को अलग २ एक २ पल लेकर उलूखल में कूट ले। तदनन्तर इन्हे एक द्रोण परिमित जल में पकावे। जब यह जल पूर्वोक्त स्वमान से चतुर्थांश रहजाय, तब इसे उतार ले। इस कषाय के साथ एक प्रस्थ घृत का पाक करे। और जीवनीयसञ्ज्ञक औषधियों का कल्क देकर पाक करे। ( जीवनीयगण की परिभाषा इस प्रकार है—"जीवकर्षभकौ मेदे, काकोल्यौ माषपर्णिका, जीवन्ती रिङ्गिणी यष्टी जीवनीयो गण स्मृत." । जीवक, ऋषभक मेदा, महामेदा, काकोली, क्षीर काकोली, माषपर्णी, जीवन्ती, मुद्गपर्णी, तथा मुलहठी, ये दश औषधिया चरक में जीवनीयसञ्ज्ञक कही है )। चौगुना दूध डाले। विदारीकन्द, आवला तथा ईख, इन तीनों का स्वरस घृत के समान डाले। फिर मन्द २ आच देकर पाक करें। जब घृत सिद्ध होकर शीत होजाय तब एक पल परिमित त्रिजातक ( दालचीनी, छोटी इलायची, तथा तेजपात त्रिजातक नाम से कहे जाते हैं) डाल दे। इस का नाम रासायनिक घृत है। यह क्षय, हृद्रोग, उर.क्षत, खाशी, तथा विविध प्रकार के ज्वरों का नाश करता है। यह रासायनिक घृत शाखाश्रित ( हाथ पैर में अवस्थित ) कोष्ठगत, तथा ऊर्ध्वजत्रुगत प्रकुपित पित्त को शीघ्र ही शमन करता है। इस घृत की तीन मासे से लेकर आधे तोले तक वैद्यानुमोदित मात्रा है। इस रासायनिक घृत को गाय के गरम दूध के साथ चीनी मिलाकर, दिन में दो बार, भोजन के पहिले सेवन कराना चाहिए ॥ ९४—१०१ ॥

## अथ शरमूलीयं घृतम्—

शरमूलेक्षुमूलानि काण्डेक्षुं सेक्षुवालिकाम्।
शतावरीं पयस्याञ्च विदारीं कण्टकारिकाम् ॥ १०२ ॥
जीवन्तीं जीवकं मेदां वीरामृषभकं बलाम्।
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम् ॥ १०३ ॥
पृथक् त्रिपलिकान् भागान्माषाणामाढकं नवम्।
जलद्रोणे विपक्तव्यमाढकञ्चावशेषयेत् ॥ १०४ ॥

वरीं खर्जूरमधुके द्राक्षां फल्गुनि पिप्पलीम्।
आत्मगुप्तां मधूकानि तथा पेष्याणि साधयेत्॥ १०५॥
विदार्यामलकेक्षूणां रसस्य च पृथक् पृथक्।
सर्पिषश्चाढकं दद्यात् क्षीरद्रोणञ्च पाचयेत्॥ १०६॥
भिषग् तद्धृतशेषं च सुपूतं योजयेत्पुनः।
शर्करायास्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैर्भिषक्॥ १०७॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च।
त्वगेलाकेशराणाञ्च चूर्णैरर्धपलोन्मितैः॥ १०८॥
मधुनः कुडवाभ्याञ्च युक्तं तत्कारयेद् घृतम्।
काचलिप्ते ऽथवा काचपात्रे संस्थापयेत्ततः॥ १०९॥
सप्ताहसंस्थितञ्चैतद् घृतं योज्यं यथाबलम्।
घृतमेतत्समाख्यातं शरमूलीयसंज्ञकम्॥ ११०॥
एष वृष्यः परं योगो बृंहणो बलवर्द्धनः।
अनेनाश्व इवोदीर्णो रमते स्त्रियमन्वहम्॥ १११॥

अथास्य घृतस्य मात्रा—

आरभ्य माषत्रितयात्तोलकार्द्धमिता परम्।
विज्ञवैद्योदिता मात्रा शरमूलीयसर्पिषः॥ ११२॥
सेरकार्द्धमितेनापि सेरपादांशिकेन वा।
प्रतसेनेह पयसा घृतमेतन्नियोजयेत्॥ ११३॥
भोजनादौ प्रतिदिनं द्विवारं विनियोजयन्।
ना चेतसापि रमणीं न जिहासत्यपि क्षणम्॥ ११४॥

शरमूलीय घृत।

सरकंडे की जड़, ईख की जड़, काण्डेक्षु (पौंडा, या गन्ना, उस की जड़), इक्षुवालिका, शतावर, क्षीरकाकोली, विदारीकन्द, कटेरी, जीवन्ती, जीवक, मेदा, वीरा (पृश्निपर्णी या काकोली) ऋषभक, खरेटी, ऋद्धि, गोखरू, रास्ना की जड़, कौंछ के बीज, तथा पुनर्नवा इन सब औषधियों को अलग अलग एक एक पल ले। और ताजे उड़दों को एक आढक परिमित लेवे। इन को एक द्रोण परिमित जल में डाल कर पकावे। जब यह पानी एक आढक परिमित रहजाय तब उतार ले। तदनन्तर शतावर, छुहारे, मुनहठी, उदुम्बर के फल, पीपल, पौंडे के बीज, तथा महुआ के फल इन

औषधियों का कल्क बनावे । तदनन्तर विदारीकन्द का रस, आवलों का रस तथा ईख का रस एक एक आढक परिमित ले । फिर इस क्वाथ, कल्क, तथा रस के साथ एक आढक परिमित घी का पाक करे । फिर एक द्रोण परिमित दूध डाल कर पाक करे। जब घृत मात्र शेष रहजाय तब उसे छान ले। जब यह शीतल होजाय तब इसमें एक प्रस्थ परिमित चीनी, एक प्रस्थ परिमित वंशलोचन, चार पल पीपल का चूर्ण, एक पल कालीमिरच का चूर्ण, दालचीनी, इलायची, तथा नाग केशर का चूर्ण आधा पल, तथा दो कुडव परिमित शहद डाल कर अच्छी तरह से मिलादे। तदनन्तर काच लिप्त अथवा काचपात्र में भर कर रखदे । जब एक सप्ताह बीत जाय, फिर इस घृत को बलाबल का विचार करके प्रयोग में लावे । इसका नाम शरमूलीय घृत है। यह घृत अत्यन्त वृष्य ( सुरतक्षमताकारक ) है । इसके प्रयोग से कृशता नष्ट होती है। यह अत्यन्त बलवर्द्धक है । इसके प्रतिदिन सेवन करने से मनुष्य घोडे की तरह प्रमत्त होकर प्रतिदिन स्त्री का सहवास कर सकता है । इस शरमूलीय घृत की तीन मासे से लेकर आधे तोले तक की मात्रा है । यह मात्रा विज्ञ वैद्यों से अनुमोदित है। आध सेर अथवा पावभर गाय के गरम दूध के साथ इस घृत को सेवन करना चाहिए । इस घृत को भोजन से पहिले प्रतिदिन दो बार सेवन करने वाला मनुष्य क्षणभर भी रमणी के सहवास को छोडना नहीं चाहता है ॥ १०२—१४ ॥

## अथ मायूरं घृतम्—

दशमूलबलारास्नात्रिफलामधुकैः सह ।
पक्षद्वितयपित्तान्त्रशकृत्तुण्डाङ्घ्रिवर्जितम् ॥ ११५ ॥
मायूरं वेशवारं तु पिष्टं तोयार्मणे पचेत् ।
तुर्यभागावशेषे च घृतप्रस्थं विपाचयेत् ॥ ११६ ॥
चतुर्गुणेन क्षीरेण जीवनीयैश्च पेष्यकैः ।
सिद्धमेतद् घृतं पूतं काचकुम्भे निधापयेत् ॥ ११७ ॥
मायूरमेतच्छंसन्ति नस्ये पाने च योजयेत् ।
नाशनं शीर्षरोगाणामर्दितस्यार्बुदस्य च ॥ ११८ ॥
कर्णशूलानि बाधिर्यं मन्यास्तम्भं हनुग्रहम् ।
पूत्यास्यं कर्णनादं च तालुशोषोपजिह्विकाम् ॥ ११९ ॥

रात्र्यन्धं पिङ्गलाक्षं च तिमिरं जलकाचताम्।
अभिष्यन्दमधीमन्थं नेत्रयोश्चापकर्षति ॥ १२० ॥
ऊर्ध्वजत्रुगतानां तु गदानां नाशनाय वै।
मायूरघृतमत्यर्थममोघं सिद्धमौषधम् ॥ १२१ ॥

## अस्य घृतस्य मात्रा—

आरभ्य माषत्रितयात्तोलकार्द्धमिता परम्।
मायूरस्य घृतस्यास्य मात्रा सद्वैद्यसंमता ॥ १२२ ॥
मात्रामिमां प्रयुञ्जीत पानायास्य तु सर्पिषः।
नस्ये तु विनियोक्तव्या त्रिचतुर्गुञ्जसंमिता ॥ १२३ ॥
माषकैकात्समारभ्य माषकद्वयसंमितम्।
प्रयोक्तव्यमिदं सर्पिः शिरसो लेपनाय वै ॥ १२४ ॥
द्विगुञ्जतः समारभ्य गुञ्जाषट्कमितं परम्।
कवोष्णमेतत्संयोज्यं कर्णशूलादिके गदे ॥ १२५ ॥
ऊर्ध्वजत्रुप्रसूतेषु गदेषु निखिलेष्वपि।
पाने नस्ये प्रलेपे च घृतमेतत्सदा हितम् ॥ १२६ ॥

### मायूरघृत

दशमूल, खरेटी, रास्ना, त्रिफला, मुलहठी, इन सोलह द्रव्यों को अलग २ समान भाग में लेवे। तथा पंख, पैर, आंत, पित्ता, विष्ठा, और चोंच, रहित मोर का मांस ले। इन पूर्वोक्त औषधियों को तथा मयूर के मांस को एक द्रोण परिमित जल में पकावे। जब यह जल चतुर्थांश शेष रहजाय तब इसे निकाल ले। फिर इस काथ से एक प्रस्थ घीको पकावे। घृत से चतुर्गुण दूध से फिर पाक करे। इस घृत के पाक करते समय जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, जीवन्ती, मुलहठी, मुद्गपर्णी, तथा माषपर्णी, इन जीवनीयसञ्ज्ञक दश औषधियों का कल्क बनाकर डाले। जब यह घृत सिद्ध होजाय इसे काचकुम्भ में रखदे। इसका नाम मायूर घृत है। इस को, नस्य ( सूंघना ) के लिए, तथा खाने के लिए दे। यह घृत संपूर्ण शिर के रोगों को दूर करता है। इस के प्रयोग से अर्दित, अर्बुद, कर्णशूल, बधिरता, शिरःस्तम्भ, हनुस्तम्भ, मुखदौर्गन्ध्य, कर्णनाद, तालुशोष, उपजिह्विका, निशान्धता, नेत्रों की पिङ्गवर्णता, तिमिर, जलकाचरोग, अभिष्यन्द ( आंखों का दुखना ) तथा अधि-

मन्थ प्रभृति रोग नष्ट करता है। ऊर्ध्वजत्रुगत व्याधियों के नाश करने के लिए यह मायूर घृत अव्यर्थ, तथा अनुभूत महौषध है। इस घृत की तीन मासे से लेकर आधे तोले तक वैद्यानुमोदित मात्रा है। यह मात्रा खाने के लिए कही गई है। नस्य के लिए तीन चार रत्ती की मात्रा उपयुक्त है। एक मासे से लेकर दो मासे तक शिर के अभ्यङ्ग के लिए इस घृतका प्रयोग करना चाहिए। दो रत्ती से छ रत्ती तक इस घृत को थोडा गरम कर कर्णशूलादिसञ्ज्ञक कर्णरोगों में प्रयुक्त कराना चाहिए। ऊर्ध्वजत्रुगत सब व्याधियों में इस घृतका पीना, नस्य करना, तथा प्रलेप करना सर्वदा हित है॥ ११५—१२६॥

### अथ महात्र्यूषणघृतम्—

सत्र्यूषणं सत्रिफलं सपाठं,
सचित्रकं स्यादथ देवदारु।
रास्नां शटीं तामलकीं विदारीं,
निदिग्धिकां गोक्षुरकं स्थिरां च॥ १२७॥
स्यादात्मगुप्तामथ शारिवां च,
काश्मर्यकं चैव परूषकञ्च।
द्राक्षां तथर्द्धिं खलु काकनासां,
मेदाञ्च दद्याद्धि शतावरीं च॥ १२८॥
एतानि कर्षप्रमितानि पिष्ट्वा,
घृतं पचेत्क्षीरचतुर्गुणेन।
घृतं महात्र्यूषणनामधेयं,
प्रकीर्तितं कासहरं नितान्तम्॥ १२९॥
हन्ति ज्वरार्शांसि शिरोभिताप-
मष्ठीलिकां वातभवामुदीर्णाम्।
हृदामये प्लीह्नि च वातगुल्मे,
क्षीणे क्षते शोषगदे च दद्यात्॥ १३०॥
हृत्पार्श्वशूलं खलु कामलां च,
घोरान् चिरोत्थानपि पञ्च कासान्।
तथैव कामं क्षुभितं च वातं,
निहन्ति सर्वान् विधिवत्प्रयुक्तम्॥ १३१॥

मापत्रयात्समारभ्य तोलकार्द्धमिता परम् ।
विद्यवैद्योदिता मात्रा महाऽयूषणसर्पिषः ॥ १३२ ॥
शृतेन गव्यपयसा घृतमेतदनुत्तमम् ।
द्विवारमन्वहं देयं भोजनादौ विजानता ॥ १३३ ॥

त्रिकटु ( सोंठ, कालीमिरच, पीपल, ), त्रिफला, पाठा, चीते की जड़, देव दारु, रास्ना, कचूर, तामलकी ( भूमि आवला ), विदारीकन्द, छोटी कटेरी, गोखरु, शालिपर्णी, बांस की जड़, अनन्तमूल, खंभारी, फालसे, दाख, ऋद्धि, कौआटोडी, मेदा, तथा शतावरी, इन सब औषधियों को अलग अलग एक एक कर्ष लेकर कल्क बनाले । इस कल्क के साथ एक प्रस्थ परिमित घृत का पाक करे । पाक करते समय घृत के चौगुने दूध को डाले । इस घृत का नाम महाऽयूषण घृत है । यह घृत खाशी के लिये अत्यर्थ महौषध है । इस घृत के सेवन करने से, ज्वर, बवासीर, तथा वातप्रधान अष्ठीलिका रोग दूर होजाता है । इस का प्रयोग, हृदय रोग, तिल्ली, वातप्रधान, गुल्म, चीण, तथा क्षत रोग के लिए विशेष गुणदायक है । यह घृत विधिपूर्वक सेवन करने से, हृच्छूल, पार्श्वशूल, कामला, पांच प्रकार के नवीन तथा जीर्ण वातरोग, तथा अत्यंत प्रकुपित वात इन सब रोगों को नाश करता है । तीन मासे से लेकर आधे तोले तक महाऽयूषण घृत की मात्रा है । इस घी को गाय के गरम दूध के साथ दिन में दो बार भोजन से पहिले सेवन करना चाहिए ॥ १२७—१३३ ॥

## अथ च्यवनप्राशोऽवलेहः—

बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटला बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ १३४ ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करोऽगुरुः ।
अभया त्वमृता ऋद्धिर्जीवकर्षभकौ शटी ॥ १३५ ॥
मुस्ता पुनर्नवा मेदा मेदा चन्दनमुत्पलम् ।
विदारी वृषमूलानि काकोली काकनासिका ॥ १३६ ॥
पचा पलोन्मितान्भागान् शतान्यामलकस्य च ।
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत् ॥ १३७ ॥
ज्ञात्वा गतरसानेतानौषधानथतं रसम् ।

तथामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः॥ १३८॥
पलद्वादशके भृष्ट्वा दत्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत्॥ १३९॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्याः पिप्पल्याश्च पलद्वयम्॥ १४०॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः॥ १४१॥
कासश्वासहरश्चायं विशेषेणोपदिश्यते।
क्षीणक्षतानां बालानां वृद्धानां चाङ्गवर्द्धनः॥ १४२॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति॥ १४३॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत्पुनर्युवा॥ १४४॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुः प्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं,
वर्णप्रसादं पवनानुलोम्यम्॥ १४५॥

रसायनस्यास्य नरः प्रयोगा-
ल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य पूर्वं,
बिभर्ति रूपं नवयौवनस्य॥ १४६॥

अध्यापनाध्यानविचारणाद्यैः,
क्षीणक्रियाणामतिदुर्बलानाम्।
मस्तिकगानां खलु नाडिकानां,
बलं विशेषाज्जनयत्यनल्पम्॥ १४७॥

बेल की जड़, अरनी की जड़, सोना पाठे की जड़, गम्भारी की जड़, पाटला-मूल (पाढल), सरेटी की जड़, शालपर्णी, पृश्निपर्णी, मुद्गपर्णी, माषपर्णी, पीवला, गोखरू, छोटी कटेरी तथा बड़ी कटेरी की जड़, काकड़ाशिंगी, भूमि आमलकी (भुई आंवला), दाख, जीवन्ती, पूठ, पुष्करमूल, अगुरुकाष्ठ, हड़, गिलोय, ऋद्धि,

जीवक, ऋषभक, कचूर, । नागरमोथा, पुनर्नवा ( विषखपरा ), छोटी इलायची, मेदा, लालचन्दन, नीलकमल, विदारीकन्द, अडूसे की जड़, काकोली, तथा, काकनासा ( कौआठोडी ) इन सब औषधियों को अलग अलग एक एक पल लेवे । तथा पांच सौ परिपक्व आंवलों को ले । इन सब को लेकर (आंवलों को पोटली में बांधकर रखना उत्तम है ) साथ ही एक द्रोण (१६ सेर) परिमित जल में डालकर पकावे जब इन औषधियों का रस निकल आवे ( प्रायः चतुर्थांश जल शेष रहने पर औषधियों का रस निकल जाता है ) तब औषधियों के क्वाथ को छानकर अलग एक पात्र में रखे । और आंवलों की गुठलियां निकालकर फेंक दे, केवल मज्जा का भाग ही अलग एक पात्र में रखले । फिर इन आवलों को बारह पल परिमित तेल और घी में भून लेना चाहिए । फिर इन आंवलों ( आंवलों को शिला में पीसकर लेना यहां उत्तम है ) को उपर्युक्त क्वाथ के साथ आधी तुला (पचास पल ) मिश्री डाल कर पाक करे जब तक लेह के समान न हो जाय, तब तक इन्हें पकाता जाय । जब अवलेह बनजाय, तब शीतल होने पर इस में छः पल शहद, चार पल परिमित वंशलोचन दो पल पीपला का चूर्ण डाल दे । तथा इस में दालचीनी, छोटी इलायची, तेजपात्र, तथा नागकेशर, इन चारों का एक पल परिमित चूर्ण डालदे । फिर अच्छी तरह से इनको मिलाकर रखदे । इस का नाम च्यवनप्राश अवलेह है । इस के सेवन करने से विशेषतया खासी और श्वासरोग दूर होता है । तथा प्रयोग से क्षीण पुरुष, उरःक्षतपीडित, वृद्ध, तथा बालकों के अङ्गों को पुष्ट करता है । यह स्वरभंग उरारोग हृदयरोग, वातरक्त, प्यास, मूत्रदोष, तथा शुक्रदोषों को दूर करता है । इस अवलेह को उतनी ही मात्रा में सेवन करना चाहिए, जिससे भूख में कमी न आवे । इस अवलेह के प्रयोग करने से च्यवन महर्षि अत्यन्त वृद्ध भी फिर युवा होगए थे । इसके प्रयोग से मेधा, स्मृति, ( स्मरणशक्ति ), तथा कान्ति ( शरीर की चमक ) बढ़ती है। मनुष्य नीरोग हो जाता है । आयु बढ़ती है । इन्द्रियों का बल बढ़ता है । रतिशक्ति में परिवृद्धि होती है । उदराग्नि प्रदीप्त होती है । चेहरे पर प्रसन्नता प्रकट होती है । कोष्ठगत विगुण वात का अनुलोमन होता है । चरकोक्त कुटीप्रावेशिक विधि से इस अवलेह का प्रयोग करने से अत्यन्त वृद्ध मनुष्य भी बुढ़ापे के विकृत रूप को छोड़कर नई जवानी के रूप को धारण करता है । यह अवलेह, पाठन, चिन्तन, तथा परिशीलन आदि मानसिक श्रम के कारण से मन्दक्रियाशील, तथा दुर्बलीभूत मस्तिष्काश्रित नाड़ियों के बल को विशेषतया बढ़ाता है । १३४—१४७ ॥

उरोगतं कण्ठसमाश्रितं च,
प्रसादसंज्ञं कुपितं तु वातम्।
कोष्ठाश्रितं चैव मलाभिधेयं,
विवृद्धमारात् शमयत्यमन्दम्॥ १४८॥
सामान्यदौर्बल्यमथातिवृद्धं,
वातप्रधानं खलु शुष्ककासम्।
श्वासं च जीर्णं खलु रक्तपित्तं,
प्राशो निहन्याच्च्यवनाभिधेयः॥ १४९॥
आरभ्य माषत्रितयादेककर्षसंमितम्।
युञ्जीत च्यवनप्राशाभिधेयमवलेहकम्॥ १५०॥
सेरकार्द्धमितेनापि सेरपादांशिकेन वा।
आजेन वापि गव्येनससितेन शृतेन च॥ १५१॥
पयसा प्राशयेन्नेममवलेहमनुत्तमम्।
द्विवारमन्वहं देयो भोजनस्य तु पूर्वतः॥ १५२॥

यह अवलेह विशेषतया उर स्थित, तथा गले में रहने वाले प्रसादनामक कुपित वायु का और कोष्ठगत मल नामक विवृद्ध वायु का शमन करता है इस के सेवन करने से सब प्रकार की साधारण दुर्बलता, अत्यन्त वृद्ध वातप्रधान शुष्ककास (सूखी खांसी) तथा श्वास, और पुराना रक्तपित्त, दूर होजाता है। च्यवनप्राश अवलेह को तीन मासे से लेकर एक तोले तककी मात्रा में देना चाहिए। इस को आधा सेर वा पावभर, बकरी के अथवा गाय के, गरम दूध से मिश्री मिलाकर सेवन कराना चाहिए। इस अवलेह को प्रतिदिन दो बार भोजन क पहिले सेवन करना चाहिए॥ १४८—१५२॥

## अथ दशाङ्गघृतम्।

हरीतकी त्रिकटुकं वचा कटुकरोहिणी।
सौवर्चलं यवक्षारो विडङ्गं चित्रकं हरेत्॥ १५३॥
अक्षप्रमाणैरेतैस्तु पृथग्दशभिरौषधैः।
कल्कीकृतैर्विधानेन घृतप्रस्थं विपाचयेत्॥ १५४॥
तत्सिद्धं स्रावयित्वा च स्निग्धभाण्डे निधापयेत्।
समाख्यातमिदं विज्ञैर्दशाङ्गघृतसंज्ञकम्॥ १५५॥

प्लीहानं वातगुल्मं च कासं हिक्कां क्रिमीनपि ।
अत्यर्थं नाशयत्येतान्रोगान् वज्र इवासुरान् ॥
त्रिमाषकात्समारभ्य तोलकार्द्धकसंमिता ।
मात्रा दशाङ्गसंज्ञस्य घृतस्यास्य मता हिता ॥ १५६ ॥

हाड, सोंठ, कालीमिरच, पीपला, वच, कटुकी, काला नमक, जवाखार, वायविडङ्ग, तथा चीते की जड, इन को लेवे । इन दश औषधियों को अलग २ एक २ कर्ष परिमित लेकर कल्क बनावे । फिर इस कल्क के साथ यथाविधि एक प्रस्थ परिमित घी को पकावे । जब यह घृत सिद्ध होजाय फिर इस को छानकर स्निग्धपात्र में रख दे । इस का नाम दशाङ्गघृत है । इस घृत के प्रयोग से तिल्ली, वातप्रधान गुल्म, खांसी, हिचकी, तथा क्रिमि रोग दूर होता है । यह घृत इन रोगों को ऐसे नाश करता है जैसे वज्र असुरों को । इन दशाङ्गघृत की आधे तोले से दो तोले तक की मात्रा है ॥ १५३—१५६ ॥

## अथ नाराचकं घृतम् ।

चित्रकं त्रिफला दन्ती त्रिवृता कण्टकारिका ।
स्नुहीक्षीरं विडङ्गानि घृतं दशममुच्यते ॥ १५७ ॥
एकैकस्य तु कर्षेण घृतस्य कुडवं पचेत् ।
चतुर्गुणेन तोयेन पाचयेन्मृदुनाग्निना ॥ १५८ ॥
सुसिद्धमथ विज्ञाय स्रावयेद्यतियत्नतः ।
शीतीभूते निदध्याच्च काचकुप्यां भिषग्वरः ॥ १५९ ॥
नाराचमिति विख्यातं सर्पिर्नाराचसंनिभम् ।
भैषज्यं संप्रयोक्तव्यं नाराचमिव शात्रवे ॥ १६० ॥
वातगुल्ममुदावर्तं प्लीहार्शोवर्ध्मकुण्डलम् ।
ग्रहणीं दीपयेन्मन्दान् कुष्ठदोषांश्च नाशयेत् ॥ १६१ ॥
आरभ्य माषत्रितयात्तोलकार्द्धमिता परम् ।
मात्रा नाराचकाख्यस्य घृतस्यास्य हिता मता ॥ १६२ ॥
उष्णोदकं प्रयोक्तव्यमनुपानेऽस्य सर्पिषः ।
वैरेचनिकमित्येतत्सर्पियोंऽयं विजानता ॥ १६३ ॥
विरिक्ते तु यवागूःस्यात्सर्पिषाल्पेन संयुता ।
रसेन जाङ्गलानां वा भोजनं दापयेद्भिषक् ॥ १६४ ॥

चीते की जड़, हाड़, बहेड़ा, आंवला, दन्तीमूल, निशोथ, कटेरी, थोहर का दूध, वायविडङ्ग, तथा घृत, इन दश औषधियों को लेवे। पूर्वोक्त नौ औषधियों को अलग २ एक २ कर्ष परिमित लेकर एक कुडव परिमित घृत का पाक करे। पाकक्रिया चौगुना पानी डालकर मन्द २ आंच देकर करनी चाहिए। जब घृत सिद्ध होजाय तो उसे छान ले। जब ठण्डा होजाय तो घृत को बोतल में रखदे। इस का नाम नाराचक घृत है। यह बाण के समान फल दिखाता है। शत्रु पर बाण को चलाने के समान, रोगसमूह को नाश करने के लिए इसका प्रयोग कराना चाहिए। इस घृत के प्रयोग कराने से वात प्रधान गुल्म, ऊर्ध्ववात, तिल्ली, बवासीर, वर्ध्मरोग तथा कुण्डलरोग दूर होजाता है। यह घृत मन्दीभूत अग्नि को प्रदीप्त करता है। और कुष्ठरोग को नष्ट करता है। इस नाराचक घृत की तीन मासे से लेकर आधे तोले तक की मात्रा है। इस घृत को चाटकर पीछे से गरम पानी को पीना चाहिए। यह घृत विरेचनिक (दस्त कराने वाला) घृत है, इस का प्रयोग विचारपूर्वक करना चाहिए। इस घृत के प्रयोग करने पर जब दस्त होजाय, तब किञ्चिद् घृत मिश्रित यवागू देनी चाहिए। अथवा जंगली जानवरों के मांस के रस से भोजन खिलावे ॥ १५७—१६४ ॥

## अथ मूलकघृतम्—

मूलकानां पुराणानां पलान्यष्टौ समानयेत्।
पादशेषं जलद्रोणे शनैर्मृद्वग्निना पचेत् ॥ १६५ ॥
पलमात्रप्रमाणेन पिष्ट्वा चैनं निधापयेत्।
दाडिमस्य च बीजानां पेयमेतत्पलपञ्चकम् ॥ १६६ ॥
पिप्पलीशृङ्गवेराभ्यां दद्यादत्र पलं पलम्।
पलं चित्रकमूलानां सुपिष्टानां प्रदापयेत् ॥ १६७ ॥
घृतस्य च पलान्यष्टौ नवस्यात्र समाहरेत्।
दध्नश्चात्र सुजातस्य समा मात्रा विधीयते ॥ १६८ ॥
एतत्सर्वं समानीय शनैर्मृद्वग्निना पचेत्।
सुसिद्धं चैनमाज्ञाय परिपूतं निधापयेत् ॥ १६९ ॥
समाख्यातमिदं माद्या घृतं मूलकसंज्ञकम्।
वातव्याधिप्रणाशाय ह्यमोघमिदमौषधम् ॥ १७० ॥
घृतमेतत्परं दृष्टं बृंहणं बलवर्द्धनम्।

गुल्मानाहप्रशमनं दारुणाजीर्णनाशनम् ॥ १७१ ॥
मलाभिधेयं खलु कोष्ठसस्थं,
समीरणं दुष्टमतिप्रवृद्धम्।
घृतं प्रयुक्तं खलु मूलकाख्यं,
विनाशयत्याशु न संशयोऽत्र ॥ १७२ ॥
ये केचिद् व्याधयः काये कफानिलसमुद्भवाः।
तेषां प्रायोगिकं श्रेष्ठं घृतमेतद्विशेषतः ॥ १७३ ॥
माषत्रयात्समारभ्य तोलकार्द्धमिता परम्।
विद्यवैद्यमता मात्रा मूलकाख्यस्य सर्पिषः ॥ १७४ ॥
पेयं कवोष्णं पानीयमनुपानेऽस्य सर्पिषः।
प्रायोगिकमिदं सर्पिः सेव्यमन्वहमादरात् ॥ १७५ ॥

आठ पल परिमित पुरानी (अर्थात् सूखी) मूली लेवे। इन मूलियों को एक द्रोण परिमित जल में डालकर मन्द २ आंच से पकावे। जब मूलियों के क्वाथ का पानी पूर्वोक्त स्वमान से चतुर्थांश रहजाय, तब उस क्वाथ को छान कर रख लेवे। और एक पल परिमित मूलियों का कल्क बनाकर रखले। तथा पांच परिमित दाडिम के बीजों (अनारदाना) को भी पीसकर कल्क बनादे। पीपल, अदरक, तथा चीते की जड़, इन तीन औषधियों को अलग २ एक २ पल परिमित लेकर इन का भी कल्क बनाकर रखदे। इस पूर्वोक्त क्वाथ तथा कल्कसमुदाय के साथ परिपाक करने के लिए ताजा घी आठ पल परिमित लेवे। दही (ठीक जमा हुआ) यहां पाक करने के लिए घृत के समान ही लेना चाहिए। इन सब औषधियों को लेकर मन्द २ आंच जलाकर घृत का पाक करे। जब यह घृत सिद्ध होजाय तब इसे छानकर रख लेवे। इसका नाम मूलकघृत है। यह घृत वात व्याधियों के नाश करने के लिए अव्यर्थ महौषध है। यह घृत अत्यन्त क्षुधावर्द्धक है। मांसवर्द्धक है। बल को बढाता है। इस के सेवन करने से गुल्म, आनाह, तथा दारुण अजीर्ण रोग नष्ट होता है। इस मूलकघृत के प्रयोग करने से मलसंज्ञक, कोष्ठ में रहने वाला, प्रकुपित, तथा अत्यन्त बढ़ वायु नष्ट होजाता है। इस में सन्देह नहीं। कफ और वायु के प्रकोप से होने वाले जितने भी रोग हैं, उन में इस घृत का लगातार प्रयोग कराना अतीव लाभदायक है। इस घृत की मात्रा तीन मासे से लेकर आधे तोले तक की है। यह मात्रा विज्ञ वैद्यानुमोदित है। इस घृत को खाकर पीछे से मन्दोष्ण जल पीना चाहिए। इस घृत

को सर्वदा सेवन करना चाहिए। यह घृत प्रयोगिक (अर्थात् सदा प्रयोजनीय) है ॥ १६५—१७५ ॥

## अथ लशुनाद्यं घृतम्—

लशुनस्य तुलामेकां जलद्रोणे विपाचयेत्।
तुर्यभागावशेषं च कषायमवतारयेत् ॥ १७६ ॥
वैद्यस्तेन कषायेण विपचेत्तु घृताढकम्।
तत्र पेष्याणि चैतानि सिद्धमाने प्रदापयेत् ॥ १७७ ॥
कर्षं चित्रकमूलस्य पिप्पल्याश्चैव कर्षकम्।
चव्यस्य च भवेत्कर्षः शृङ्गवेरस्य वै पलम् ॥ १७८ ॥
लवणानां च पञ्चानां पलार्द्धञ्चाम्लवेतसात्।
तथा यवानिकायाश्च हिंगुनोऽत्र पलं भवेत् ॥ १७९ ॥
तत्सिद्धं निस्रुतं सम्यक् स्निग्धपात्रे निधापयेत्।
तस्य मात्रां पिबेत्काले शृणु मे येषु तद्धितम् ॥ १८० ॥
अष्ठीलायां च गृध्रस्यां वातगुल्मे भगन्दरे।
वातश्लेष्मामयार्तेषु प्लीह्नि पाण्ड्वामयेऽपि च ॥ १८१ ॥
एकाङ्गरोगिणां चैवहितं सर्वाङ्गरोगिणाम्।
लशुनाद्यं घृतं ह्येतदश्विभ्यां परिकीर्तितम्॥ १८२ ॥
माषद्वयात्समारभ्य तोलकार्द्धमितं परम्।
लशुनाद्यं घृतं वैद्यः प्रयुञ्जीत यथाबलम् ॥ १८३ ॥
द्विवारमन्यद्दं देयमनुपाने च योजयेत्।
कवोष्णीकृतपानीयं पथ्यं वातप्रसेवनम् ॥ १८४ ॥

निम्नोक्त लशुन एक तुला परिमित लेकर एक द्रोण परिमित जल में पकावे। जब यह जल पूर्वोक्त रूपमान से चतुर्थांश रह जाय तब उसको उतार कर रखदे। फिर इस क्वाथ को छानकर रखले। तदनन्तर इस कषाय से एक आढक (चारप्रस्थ परिमित) परिमित घृत का पाक करे। पाक करते समय नीचे लिखी हुई औषधियों को निर्दिष्ट परिमाण में लेकर, कल्क बनाकर उस घी में डाल दे। चीते की जड़ एक कर्ष, पीपला एक कर्ष, चव्य एक कर्ष, तथा अदरक एक पल ले। पाँचों लवण, अम्लवेत, तथा अजवायन, प्रत्येक को दो कर्ष लेवे। हींग एक पल डाले। जब

घृत सिद्ध होजाय, तब उसे छानकर स्निग्धपात्र में डालकर रख देवे। इस घृत को मात्रा से अधिक न खावे। जिन जिन रोगों में यह घृत लाभदायक है उनके नाम सुनो। अष्ठीला, गृध्रसी, वातप्रधान, गुल्म, भगन्दर, तिल्ली तथा पाण्डुरोग में यह विशेषतया लाभकारक है। वातप्रधान, तथा श्लेष्मप्रधान रोगों से दुःखित मनुष्यों के लिए भी इसका सेवन विशेष गुणकारी है। एकाङ्गगत, तथा सर्वाङ्गगत पक्षाघात नामक रोग में भी यह हितकर है। इस का नाम लशुनाद्यघृत है। अश्विनीकुमारों ने इस घृत का अविष्कार किया था। इस घृत की दो मासे से लेकर आधे तोले तक की मात्रा है। मनुष्य के बलाबल का विचार करके इस घृत का प्रयोग करना चाहिए। इस घृत को दिन में दोबार खाना चाहिए। इस घृत को खाकर मन्दोष्णजल अनुपान के लिए ग्रहण करे। इस घृत के प्रयोग करते समय वातनाशक भोजनादि का सेवन पथ्य है॥ १७६—१८४॥

## अथ आमलकघृतम्—

घृतं दशगुणे तोये साधयेदाजलक्षयात्।
ततो दशगुणे तोये साध्यमामलकं तथा॥ १८५॥
चतुर्थांशावशिष्टेन घृतप्रस्थं विपाचयेत्।
पञ्चवारं त्रिवारं वा घृतमेवं तु साधयेत्॥ १८६॥
तत् सिद्धं स्थापयेद्वैद्यः काचकुम्भे दृढे ऽमले।
समाख्यातमिदं सर्पिः श्रेष्ठमामलकाभिधम्॥ १८७॥
रक्तपित्तप्रशमनं क्षतक्षीणसुखावहम्।
विनिहन्ति विशेषेण पित्तजानिखिलामयान्॥ १८८॥
सर्वज्वरहरं चैतद् हस्तपादाङ्गदाहजित्।
दीर्घकाल प्रयोगश्चे भवेद्दिव्यं रसायनम्॥ १८९॥
तोलकार्द्धात्समारभ्यत्वेक तोलकसंमितम्।
यथाबलं प्रयुञ्जीत घृतमामलकाभिधम्॥ १९०॥
सितोपलायुतेनेह शृतेन पयसा सह।
वारद्वयं दिने देयमेतत्प्रायोगिकं घृतम्॥ १९१॥

एक प्रस्थ परिमित घी को लेकर उसे दशगुने पानी में डालकर तबतक पकाता

जाय, जब तक सारा का सारा जल सूख न जाय। फिर इसी प्रकार आंवलों को भी दशगुने पानी में डालकर पकावे। जब पानी पूर्वोक्त स्वमान से चतुर्थांश रहजाय तब इस पानी से घृत का पाक करे। इसी रीति से पांच बार अथवा तीनबार पाक करे। जब घी सिद्ध हो जाय तो इसे सुदृढ तथा सुनिर्मल काचकुम्भ में रखदे। इस का नाम आमलकघृत है। यह घृत रक्तपित्त नाशक है। क्षतरोगी, तथा क्षीण रोगियों के लिये अत्यन्त लाभदायक है। इसके सेवन करने से सब पित्त रोग नष्ट हो जाते हैं। यह विविध प्रकार के ज्वरों को दूर करता है। यह घृत॰हाथ, पैर की जलन, तथा अङ्गदाह को दूर करता है। इसको लगातार सेवन करना चाहिए। यह बल को बढ़ाता है, तथा रसायन है मनुष्य के बलाबल का विचार करके इस घृत को आधे तोले से एक तोले तक प्रयोग में लावे। इस घृत को दिन में दोबार मिश्री मिले हुए गरम दूध से सेवन करना चाहिए। यह प्रयोगिक ( सर्वदा सेवनीय ) घृत है॥ १८५—१६१॥

## अथ सिद्धोत्तरं घृतम्—

विंशतिप्रमितान्धात्रीफलांश्चैव विभीतकान्।
अभयाश्च हरेदत्र त्रायमाणां पलोन्मिताम्॥ १६२॥
तथैव तिक्तरोहिण्या गुडूच्याश्च पलं भवेत्।
तोयार्द्धकंसे सिद्धं तु तुर्यभागावशेषितम्॥ १६३॥
परार्घ्ये कुडवेनैतद् घृतंगव्यमधिश्रयेत्।
कल्कीकृतानि चैतानि निम्नोक्तानि प्रदापयेत्॥ १६४॥
पिप्पलीनां पलार्द्धञ्च त्रिवृतार्द्धपलोन्मिता।
कम्पिल्लकाच कर्षांशं दश स्यान्निचुलानि च॥ १६५॥
तत्सिद्धं निस्तुतं पेयं कामलापाण्डुनाशनम्।
प्रमेहिणां शोथवतां गुल्मिनां कुष्ठरोगिणाम्॥ १६६॥
शिश्नव्यध्युदराणां च ज्वरोदावर्तरोगिणाम्।
वैरोप्यानाञ्च रोगाणां पथ्यं सिद्धोत्तरं घृतम्॥ १६७॥
आरभ्य माषत्रितयात्तोलकार्द्धमितं घृतम्।
सिद्धोत्तरं प्रयुञ्जीत पयसा तु यथाबलम्॥ १६८॥

हरड़, बहेड़ा, तथा आंवला इन तीनों औषधियों के फलों को गिनकर अलग अलग बीस बीस लेले। और एक पल परिमित त्रायमाणा ले। कुटकी और गिलोय का

परिमाण भी आयमान के समान लेना चाहिए। इन सब औषधियों को दो प्रस्थ परिमित जल से पकाकर चतुर्थांश शेष रहने पर उतार ले। फिर इस क्वाथ के साथ एक कुडव परिमित गव्य घृत का पाक करे। पाक करते समय निम्नलिखित औषधियों का कल्क डाले। पीपला तथा निशोथ अलग अलग दो दो कर्ष, कमीला, एक कर्ष और निउल बीज संख्या में दश लेकर कल्क बनाकर डाले। जब घृत सिद्ध होजाय तब इसे छानले। इसके सेवन करने से कामला तथा पाण्डुरोग दूर होता है। यह घृत प्रमेह, शोथ, गुल्म, कुष्ठ, शिरोरोग, उदररोग, ज्वर, तथा उदावर्त आदि विविध रोगों से पीड़ित मनुष्यों के लिए अत्यन्त पथ्य है। मनुष्य का बलाबल का विचार करके तीन मासे से एक तोले तक सिद्धोत्तर घृत को प्रयोग में लावे॥ १६२—१६८॥

## अथ धान्वन्तरं घृतम्।

दन्तीचित्रकमूलानां पलान्यष्टौ च षट् नखात्।
अभया विंशति गुर्व्य पट्पलं देवदारु च॥ १९९॥
निम्बः कदम्बो वरुणो राजवृक्षः पुनर्नवा।
चिरबिल्वत्वचा चैव पृथक् पट्पलिकाः स्मृताः॥ २००॥
द्वे पञ्चमूले संहृत्य पृथगाढकसंमिते।
विपाचयेच्चतुर्द्रोण सलिले मृदुनाग्निना॥ २०१॥
तुर्यभागावशेषं तत्कषायमवतारयेत्।
घृताढकं पचेत्तस्मिन्कल्कांश्चेमान्प्रदापयेत्॥ २०२॥
पिप्पलीं पिप्पलीमूलं चव्यञ्च मरिचानि च।
लवणानाञ्च पञ्चानां पृथक् कर्षं समापयेत्॥ २०३॥
तत्सिद्धं परिपूतञ्च शीतीभूतं निधापयेत्।
विगृताले स्निग्धभाण्डे पिधानकसमन्विते॥ २०४॥
एतद्धान्वन्तरं सर्पिः सर्वरोगनिबर्हणम्।
पञ्च गुल्मान्निहन्त्येतदष्टौ चोदरजान् गदान्॥ २०५॥
श्वयथुं शोषमर्शांसि प्रमेहांश्चिकार्यमिद्वातिम्।
दीपयेज्जठराग्निं मन्द्यां कुष्ठान् मधुविधाञ्जयेत्॥ २०६॥
अहीनां मूषिकानाञ्च यच्च स्यात्कृत्रिमं विषम्।
तत्सर्वं नाशयत्याशु घृतमेतदसंशयम्॥ २०७॥

भिषगेतद् घृतं सिद्धं पाययेद्धि यथाबलम्।
सर्वाहारेष्वनियमो बृंहणं परमं मतम्॥ २०८॥
एतद्धान्वन्तरं सर्पिः श्रेष्ठं ब्रह्माभिपूजितम्।
यथावत्संप्रयुंजानः प्राप्नुयात्सिद्धिमुत्तमाम्॥ २०९॥
आरभ्य माषत्रितयात्तोलकार्द्धमितं परम्।
यथाबलं प्रयुञ्जीत घृतं धान्वन्तराभिधम्॥ २१०॥

दन्तीमूल आठपल, चीते की जड आठपल, नखी छ पल, बडी हरड २० पल, देवदारु छ पल, तथा नीमकी छाल, कदम्ब की छाल, वरुणत्वक्, (वरने की छाल), अमलतास, पुनर्नवा, और करञ्जत्वक् (कंज की छाल), इन औषधियों को अलग २ छ २ पल लवे। बेल के मूल की छाल, अरनी की छाल, सोनापाठे की छाल, गंभारी, पाटेलामूल (पाढल की जड), शालपर्णी, पृश्निपर्णी छोटी कटेरी, बड़ी कटेरी, और गोखरू, इन दश औषधियों को समान परिमाण में लेकर मिलाकर आठ प्रस्थ परिमित लेवे। इन को चार द्रोण परिमित जल में डालकर मन्द २ आंच देकर पकावे। जब यह क्वाथ पूर्वोक्त स्वमान से चतुर्थांश रहजाय, तब उतार दे। तदनन्तर इस क्वाथ को छानकर रखले। फिर इस के साथ चार प्रस्थ घीका पाक करे। निम्न लिखित औषधियों का कल्क बनाकर डाले। पीपल, पीपलामूल, चव्य, काली मिरच, सैन्धवलवण, बिड्लवण, शाम्भरलवण, सामुद्रलवण, तथा कालानमक, इन औषधियों को अलग २ एक कर्ष लेवे। फिर इन का कल्क बनाकर घृत पाक करते समय डाले। जब घी सिद्ध होजाय तब उसे छानले। जब घृत ठंडा होजाय तब उसे चौड़े मुख वाले स्निग्धपात्र में रख कर ढकना लगादे। इसका नाम धान्वन्तर घृत है। यह रोगों को दूर करता है। इस घृत के सेवन करने से पांच प्रकार के गुल्म, आठ प्रकार के उदर रोग, शोथ, शोष, बवासीर, तथा इक्कीस प्रकार के प्रमेह, दूर होते हैं। यह घृत मन्दी भूत ग्रहणी को प्रदीप्त करता है। विविध प्रकार के कुष्ठरोगों को हटाता है। यह घृत सर्पविष, मूषिकविष, तथा कृत्रिमविषों को दूर करता है, इसमें संशय नहीं है। इस घृत को बलाबल का विचार करके प्रयोग में लावे। इस के प्रयोगमें भोजन का नियम नहीं है। यह घृत विशेषतया शरीर पुष्टि कारक है। यह धान्वन्तरघृत ब्रह्मा से अभिपूजित है। इस घृत को विधि से सेवन करने से मनुष्य उत्तमसिद्धि को प्राप्त करता है। बलाबल का विचार करके इस घृत को तीन माशे से एक तोले तक की मात्रा में प्रयुक्त करना चाहिए॥ १९९—२१०॥

मेथीमोदकः—

जीरकद्वितयं धान्यं वरा मुस्तं च पिप्पली ।
पुष्करं मरिचं शृङ्गी शुण्ठी कट्फलसैन्धवम् ॥ २११ ॥
विडं यमानी तालीशं पत्रं वै नागकेशरम् ।
जातीपत्रीफले चन्द्रलवङ्गैला त्वचा तथा ॥ २१२ ॥
मधूरिका मुरा मांसी यष्टीमधुकपत्रकम् ।
शतपुष्पा दारु चव्यं सर्वमेतत्समं हरेत् ॥ २१३ ॥
यावन्त्येतानि चूर्णानि मेथिका तन्मिता मता ।
सिता च द्विगुणा देया साधयेदल्पवारिणा ॥ २१४ ॥
आज्यक्षौद्रसमायुक्तं मोदकान् साधयेत्ततः ।
समाख्यातमिदं विद्भिर्मेथीमोदकसंज्ञकम् ॥ २१५ ॥
आरभ्य माषत्रितयात्तोलकार्द्धमितं परम् ।
प्रयुञ्जीत भिषग्वर्यो बलकालाद्यपेक्षया ॥ २१६ ॥
शीलयेत्प्रातरुत्थाय यथादोषानुपानतः ।
आमदोषं निहन्त्याशु वह्निमान्द्यं विशेषतः ॥ २१७ ॥
अर्शांसि ग्रहणीरोगमतीसारं सुदारुणम् ।
कासं श्वासं पाण्डुरोगं प्लीहानं वमनारुचिम् ॥ २१८ ॥
मन्दाग्निजननं यच्च सूतिकामयनाशनम् ।
विशेषतः समाख्यातं वातशूलिमुखैर्मतम् ॥ २१९ ॥

सफेद जीरा, काला जीरा, धनियां, त्रिफला, (हाड़ बहेड़ा आंवला) नागरमोथा, पीपल, पुष्करमूल, काली मिरच, काकड़ासिंगी, सोंठ, कायफल की छाल, सेंधा नमक विडलवण, अजवायन, तालीसपत्र, तेजपत्र, नागकेशर, जायफल, जावित्री, कपूर, लौंग, इलायची, दालचीनी, सोंये के बीज, मुरा, जटामांसी, मुलहठी, पत्रज, चोर, देवदारु, और चव्य, इन सब औषधियों को अलग २ एक २ भाग ले इन सब के समान मेथी ले। इन को कूट कपड़छन कर चूर्ण बनावे। फिर (इस चूर्ण के) समान परिमाण में खांड ले। थोड़ा सा पानी (खांड का अर्द्धपरिमाण) मिलाकर पाक करे। जब पाक ठीक होजाय तब उस में चूर्ण मिला दे। तदनन्तर करछी से अच्छी तरह से मिलाकर घी और शहद के साथ मोदक बनावे। इन का नाम मेथीमोदक है। इन की मात्रा तीन मासे से आधे तोले तक की है। मनुष्य के

मलादिक का विचार करके उपयुक्त मात्रा का निर्णय करे। इन मोदकों को प्रातःकाल उचित अनुपान के साथ खावे। इन के सेवन करने से आमदोष, वह्निमान्द्य, बवासीर, संग्रहणी, प्रबल अतीसार, खांसी, श्वास, पाण्डुरोग, प्लीहरोग, वमन, अरुचि, आदि रोग नष्ट होते हैं। यह मेथीमोदक सूतिका रोग को विशेषतया नष्ट करता है। इस के सेवन करने से भूख बहुत लगती है, और शारीरिक बल बढता है। इसका आविष्कार पातञ्जलि मुनि ने किया था ॥ २११—२१६ ॥

## अथ चव्यादिघृतम्—

चव्यं पाठां त्रिकटुकं धान्यकं यावशूकजम् ।
यमानिका कणामूलं विडचित्रकसैन्धवम् ॥ २२० ॥
अभयां विल्वमूलं च पिष्ट्वाज्यं परिपाचयेत् ।
दध्ना चतुर्गुणेनेह सिद्धशीतं तु विन्यसेत् ॥ २२१ ॥
समाख्यातमिदं नाम्ना घृतं चव्यादिसंज्ञकम् ।
माषत्रयात्समारभ्य मात्रा तोलकसंमिता ॥ २२२ ॥
प्रवाहिकां मूत्रकृच्छ्रं गुदभ्रंशं सुदारुणम् ।
गुदवङ्क्षणशूलं च पीतमेतन्निहन्त्यरम् ॥ २२३ ॥
यथादोषानुपानेन घृतमेतत्तु मात्रया ।
शकृद्वातानुलोम्याय नियुञ्जीत भिषग्वरः ॥ २२४ ॥

चव्य, पाढ, सोंठ, कालीमिरच, पीपल, धनियां, यवक्षार (जवाखार), अजवायन, पीपलामूल, बिडलवण, चीते की जड़, सेंधा नमक, हरड़, बेल की छाल, इन औषधियों मिलित एक सेर लेकर कल्क बनाकर चार सेर घृत का पाक करे। पाक करते समय घृत से चौगुना दही तथा पानी डालकर पाक करे। जब घृत सिद्ध होजाय तो शीतल होने पर छानकर रखदे। इस का नाम चव्यादिघृत है। इस की मात्रा तीन मासे से एक तोले तक है। इस के सेवन करने से प्रवाहिका, मूत्रकृच्छ्र, गुदभ्रंश, तथा वङ्क्षणशूल नष्ट होता है। यह घृत विशेषतया मल, तथा मलवात को अनुलोमन करने के लिए महौषध है ॥ २२०—२२४ ॥

## बृहद्वासावलेहः—

शतं संगृह्य वासायास्तोयद्रोणे विपाचयेत् ।
चतुर्भागावशेषेऽस्मिन् सितां पलशतं न्यसेत् ॥ २२५ ॥

स्पूपर्णं त्रिसुगन्धिश्च कट्फलं मुस्तकं गदम् ।
जीरकं पिप्पलीमूलं रेचनी चविका शुभा ॥ २२६ ॥
कटुका श्रेयसी चैव तालीशं धान्यकं तथा ।
कार्षिकं पृथगेतेषां क्षिपेन्मधु पलाष्टकम् ॥ २२७ ॥
तद्यथाग्निबलं लिह्याच्छृतशीताम्बुना सदा ।
निहन्ति राजयक्ष्माणं रक्तपित्तं क्षतक्षयम् ॥ २२८ ॥
वातिकं पैत्तिकं कासं श्वासञ्चैव सुदारुणम् ।
हृच्छूलं पार्श्वशूलं च वमिञ्चैवारुचिं ज्वरम् ॥ २२९ ॥
त्रिमाषकात्समारभ्य तोलकार्द्धमिता परम् ।
मात्रास्य बुधनिर्णीता बलकालाद्यपेक्षया ॥ २३० ॥
बृहद्वासावलेहोऽयं नामतः परिकीर्तितः ।
आविष्कृतः पुराश्विभ्यां विश्वमङ्गलकाम्यया ॥ २३१ ॥

अडूसे की जड़ की छाल १०० पल लेकर एक द्रोण परिमित जल में पाक करे । जब यह जल चतुर्थांश रहजाय तब इस में १०० पल साफ खांड डालकर पाक करे । जब यह गाढ़ा होजाय तब—सोंठ, कालीमिर्च, पीपल, दालचीनी, छोटी इलायची, तेजपत्र, कायफल, नागरमोथा, कूठ, जीरा, पीपलामूल, कपीला, चव्य, वंशलोचन, कुटकी, गजपीपल, तालीशपत्र तथा धनियां इन औषधियों का चूर्ण अलग २ एक एक कर्ष लेकर डालदे । तदनन्तर कड़छी से खूब आलोडन करे । जब शीतल हो जाय तब इस में आठ पल शहद डालकर खूब मिलावे । इस अवलेह को अग्नि के बलाबल विचार करके उचित मात्रा से औटाकर ठंडे किए हुए पानी के साथ सेवन करे । इसके प्रयोग से राजयक्ष्मा, रक्तपित्त, उर क्षत, क्षय, वातिक तथा पैत्तिक कास, और श्वास, हृदयशूल, पार्श्वशूल, वमन, अरुचि ज्वर आदि रोग नष्ट होते हैं । इस अवलेह की मात्रा तीन मासे से आधे तोले तक है । इसका नाम बृहद्वा-सावलेह है । इस अवलेह का आविष्कार अश्विनी कुमारों ने किया था ॥ २२५—२३१ ॥

## छागलाद्यघृतम् ।

आजं चर्मविनिर्मुक्तं त्यक्तशृङ्गनखादिकम् ।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ॥ २३२ ॥

तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सयष्ट्याह्वैः चीरश्चैव शतावरी ॥ २३३ ॥
छागलाद्यमिदं नाम्ना सर्ववातविकारनुत् ।
अर्दिते कर्णशूले च बाधिर्ये मूकमिन्मिने ॥ २३४ ॥
जडगद्गदपङ्गूनां गृध्रस्यां खञ्जकुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत्प्रशस्यते ॥ २३५ ॥
पृथगर्द्धतुलां पञ्चमूलद्वन्दाजमांसयोः ।
निःक्वाथ्य सलिलद्रोणे क्वाथे पादावशेषितम् ॥ २३६ ॥

सींग, नख, तथा चर्म आदि से रहित बकरे का मांस आधा तुला, ( ५० पल ) तथा दशमूल आधा तुला लेकर एक द्रोण जल में डालकर, काथ पाक करे। जब वह जल चतुर्थांश रहजाय तो उतारकर छान ले। तदनन्तर इस क्वाथ के साथ एक प्रस्थ घृत का पाक करे। जीवक, ऋषभक, मेदा, महामेदा, काकोली, चीरकाकोली, मुद्गपर्णी, माषपर्णी, जीवन्ती, तथा मुलहठी, इन औषधियों का कल्क बनाकर डाले। तदनन्तर शतावरी का रस तथा गव्य दुग्ध डालकर पाक करे। इसका नाम छागलाद्य घृत है। यह सब प्रकार के वात रोगों के लिए महौषध है। इसके प्रयोग से विशेषतया अर्दित, कर्णशूल, बाधिर्य, मूकरोग, मिन्मिनरोग, गद्गदता, पङ्गुता, गृध्रसी, खञ्जता, कुब्जता, अपतानक, अपतन्त्रकप्रभृति रोग दूर होते हैं ॥ २३१—२३६ ॥

## धान्वन्तरघृतम् ।

द्वे पञ्चमूले संहृत्य पृथगाढकसंमिते ।
विपाचयेदपां द्रोणे सारसे मृदुनाग्निना ॥ २३७ ॥
चतुर्भागावशेषं तत् कषायमवतारयेत् ।
घृताढकं पचेत्तस्मिन् पेष्यांश्चेमान्प्रदापयेत् ॥ २३८ ॥
पिप्पलीं पिप्पलीमूलं चव्यं च मरिचानि च ।
लवणानां च पञ्चानामावपेदेककार्षिकान् ॥ २३९ ॥
एतद्धान्वन्तरं सर्पिः सर्वरोगनिबर्हणम् ।
पञ्चगुल्मानभिव्यक्तानर्शो चोदरजान् गदान् ॥ २४० ॥
श्वयथु शोषमर्शांसि प्रमेहांश्चैकविंशतिम् ।
दीपयेद्ग्रहणीं मन्दां कुष्ठान् बहुविधाञ्जयेत् ॥ २४१ ॥

अहीनां मूषिकाणां च यच्च स्यात्कृत्रिमं विषम् ।
सर्वाहारेष्वनियमो बृंहणो वीर्यवर्द्धनः ॥ २४२ ॥
एतद्धान्वतरं सर्पिः श्रेष्ठं ब्रह्माभिपूजितम् ।
यथावत्संप्रयुञ्जानः प्राप्नुयात्सिद्धिमुत्तमाम् ॥ २४३ ॥

लघु पञ्चमूल ( शालपर्णी, पृश्निपर्णी, बडी कटेरी, छोटी कटेरी, गोखरू ) चार प्रस्थ, तथा बृहत्पञ्चमूल ( बिल्वमूलछाल, श्योनाकछाल, गम्भारीछाल, पाटलामूलछाल गनियारी की छाल ) चार प्रस्थ लेकर एक द्रोण परिमित ( मानपरिभाषा के अनुसार दो द्रोण ) निर्मल जल में डालकर धीमी २ आंच देकर क्वाथ पाक करे। जब यह जल पूर्वोक्त मान से चतुर्थांश रहजाय इसे निर्मल वस्त्रद्वारा छानले। इस कषाय के साथ एक आढक ( चार प्रस्थ ) परिमित गव्यघृत का पाक करे। पाक करते समय निम्नलिखित वस्तुओं का कल्क डाले। पीपला, पीपलामूल, चव्य, कालीमिरच, पांचों नमक ( सेंधव, बिड, कृष्णलवण, शाकम्भरीयलवण, सामुद्रलवण ) ये औषधियां पृथक् एक कर्ष लेकर इन का कल्क बनाकर डाले। यथाविधि पाक करले। इस का नाम धान्वन्तरघृत है। इस के प्रयोग से सब रोग दूर होजाते हैं। यह घृत पांच प्रकार के गुल्म, आठ उदर रोग, शोथ, शोष, बवासीर, प्रमेह, संग्रहणी, कुष्ठरोग, प्रभृति विविध रोगों को दूर करता है। इस के प्रयोग से सर्पविष, मूषकविष, तथा कृत्रिम विष दूर होता है। इसके प्रयोग में आहार विशेष का नियम पालन नहीं करना पड़ता। यह घृत बृंहण तथा वीर्यवर्द्धक है। इस का नाम धान्वन्तर घृत है। इस घृत को विधिपूर्वक सेवन करने से ( उक्तरोगों में ) उत्तमसिद्धि प्राप्त होती है ॥२३७-२४३॥

## जीवन्त्याद्यं घृतम् ।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीपुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥ २४४ ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीं च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥ २४५ ॥
एतद् व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ २४६ ॥
घृतमेतत्समाख्यातं जीवन्त्याद्यसमाह्वयम् ।
मात्रा चास्य प्रयोक्तव्या रक्तितोलकसंमिता ॥ २४७ ॥

जीवन्ती, मुलहठी, किशमिश, इन्द्रजौ, कचूर, पुष्करमूल, छोटी कटेरी, गोखरू खरेटी, नीला कमल, भूईंआंवला, त्रायमाण, धमासा, तथा पीपल इन औषधियों का कल्क बनाकर यथाविधि घृत का पाक करे। इस घृत को सेवन करने से एकादश लक्षणयुक्त राजयक्ष्मा नष्ट होजाता है। इस का नाम जीवन्त्याद्य घृत है। इस की मात्रा आधा तोला है॥ २४४—२४७॥

## अथ विषहरं घृतम्–

चन्दनं च तथोशीरं पद्मकं नीलमुत्पलम्।
त्रायमाणा शिरीषश्च चन्दनं शारिवाद्वयम्॥ २४८॥
तथा प्रतिविषा धात्री तथा तामलकी भवेत्।
पृथक् पलार्द्धं संगृह्य कल्कैनैषां प्रयत्नतः॥ २४९॥
चतुर्गुणं जलं दत्वा घृतप्रस्थं विपाचयेत्।
तद्धि सिद्धं प्रमेहेषु रक्तपित्ते क्षयेषु च॥ २५०॥
अर्शःसु पाण्डुरोगे च विशेषेण हितं मतम्।
प्रणुदेद् ग्रहणीदोषांस्त्वग्दोषांश्च शरीरिणाम्॥ २५१॥
सर्पिरेतद्भवेत्पथ्यं विषघ्नममृतोपमम्।
घृतमेतद्विषहरं नामतः परिकीर्तितम्॥ २५२॥
माषत्रयात्समारभ्यरैक तोलक संमिता।
मात्रा विषहराख्यस्य घृतस्यास्य भिषङ्मता॥ २५३॥
शृतेन गव्यपयसा द्विवारं प्रतिवासरम्।
प्रयुञ्जीत भिषग्वर्यं प्रायोगिकमिदं घृतम्॥ २५४॥

लालचन्दन, खस, पद्माख, नीला कमल, त्रायमाणा, शिरीष, लालचन्दन, अनन्तमूल, श्यामालता, अतीस, आवला तथा भूम्यामलकी (भूईं आंवला इन सब औषधियों को अलग अलग आधा पल लेकर कल्क बनावे। इस कल्क के साथ घृत से चौगुना जल डालकर एक प्रस्थ परिमित घी का पाक करे। जब यह सिद्ध होजाय इसे छानकर रखदे। यह घृत प्रमेह, रक्तपित्त, क्षय, बवासीर, तथा पाण्डुरोग में विशेष गुण करता है। यह घृत ग्रहणी के विकारों को, और त्वचा के विविध दोषों को दूर करता है। यह घृत मनुष्यों के लिए अत्यन्त हितकर है। विषों को दूर करता है। अमृत के समान गुणदायक है। इसका नाम विषहर घृत है। इस घृत की तीन मासे से एक

मासे तक की मात्रा है । इस घृत को गाय के गरम दूध के साथ प्रतिदिन दो बार सेवन करना चाहिए । यह घृत प्रायोगिक ( सर्वदा सेवन करने के योग्य है ) ॥ २४७—२५४ ॥

### अथ बिन्दुघृतम्—

चित्रकं त्रिवृता श्यामा पृथगेव पलं हरेत् ।
पथ्यायाः शतार्द्धपलिका द्रोणार्द्धं सलिलस्य च ॥ २५५ ॥
तुर्यभागावशेषं तत्कषायमवतारयेत् ।
ततस्तेन कषायेण घृतप्रस्थं विपाचयेत् ॥ २५६ ॥
कुडवार्द्धं नीलिकाया पलं कम्पिल्लकस्य च ।
चतुष्पलं सुधाक्षीरं गर्भे दत्वा तु साधयेत् ॥ २५७ ॥
पतत्सिद्धं सुपूतं च काचकुम्भे निधापयेत् ।
एतद्बिन्दुघृतं नाम नैकरोगविनाशनम् ॥ २५८ ॥
यावतस्तु पिबेद्बिन्दूंस्तावद्वारान् विरिच्यते ।
गुल्मं प्लीहानमुदरं कुष्ठानि त्र गराणि च ॥ २५९ ॥
रक्तगुल्मं च हन्त्याशु गण्डमालां भगन्दरम् ।
विविधानि विषाणीह तथा नाशयति द्रुतम् ॥ २६० ॥
पित्तार्शःसूर्ध्ववातेषु रोगा ये सान्निपातिकाः ।
हितं मतं घृतश्चैतद्वैरेचनिकमुत्तमम् ॥ २६१ ॥
यथाकाले प्रयोक्तव्यं घृतमेतद्विजानता ।
बलाबलं चोदय सम्यक् घृतमेतन्नियोजयेत् ॥ २६२ ॥

चीते की जड़ एक पल, सफेद निशोथ एक पल, तथा काली निशोथ एक पल ले । इन चार ओषधियों को आधा द्रोण जल में डालकर पकावे । जब यह क्वाथ चतुर्थांश रहजाय, तब इसे उतार ले फिर इस कषाय को छानकर रखले । फिर कषाय के साथ एक प्रस्थ घी का पाक करे । इस में पाक करते समय दो पल परिमित नीलिनी (के बीजों) का, और एक पल परिमित कमीले का कल्क डाले । और थोहर का दूध भी चार पल परिमित डालकर घृत का पाक करे । जब यह घृत सिद्ध होजाय तब इसे छानकर काचकुम्भ में रखदे । इस का नाम बिन्दु-घृत है । यह बहुत रोगों को दूर करता है । इस घृत के जितने बूंद रोका किए जायेंगे, उतनी ही बार इस से दस्त आयेंगे । इस घृत के सेवन करने से गुल्म, तिल्ली,

उदर रोग, विविध कुष्ठरोग, अनेक प्रकार के गरविष, रक्तगुल्म, गण्डमाला, भगन्दर, तथा विविध प्रकार के विषों को दूर करता है। यह घृत पित्तजनित बवासीर, ऊर्ध्ववात, तथा सान्निपातिक रोगों के लिए लाभदायक है। यह घृत उत्तम विरेचन कारी है। इस घृत का विज्ञवैद्य यथा समय प्रयोग करे। मनुष्य के बलाबल का विचार करके इस घृत को प्रयोग में लावे॥ २५५—२६२ ॥

## अथ महाबिन्दुघृतम्—

सुधाक्षीरपले द्वे च प्रस्थार्द्धं चैव सर्पिषः।
कम्पिल्लकपलं चैव शाणार्द्धं सैन्धवस्य च॥ २६३ ॥
त्रिवृतायाः पलं चैकं कुडवो धात्रिकारसात्।
तोयकंसेन विपचेच्छनैर्मृद्वग्निना भिषक्॥ २६४ ॥
ततः सिद्धं सुपूतं च काचकुप्यां निधापयेत्।
निरोधयेत्तथा काचपिधानेन मुखं ततः॥ २६५ ॥
महाबिन्दुघृतं श्रेष्ठमश्विभ्यां परिकीर्तितम्।
वैरेचनिकमित्येतद् घृतं श्रेष्ठतमं स्मृतम्॥ २६६ ॥
यावतस्तु पिबेद्बिन्दून् तावद्वारान् विरिच्यते।
घृतस्यास्य प्रयोगेण सत्यं नास्तीह संशयः॥ २६७ ॥
एतद्गुल्मान् सनिचयान् सशूलान्सपरिग्रहान्।
भिनत्त्याशु प्रयोगेण वायुर्जलधरानिव॥ २६८ ॥
सर्वासुरवधार्थाय यथा वज्रं शचीपतेः।
पञ्चगुल्मवधार्थाय सर्पिरेतत्तथा मतम्॥ २६९ ॥
शमयत्युदराण्यष्टौ दारुणं चोर्द्ध्ववातकम्।
कुष्ठानि च विशेषेण महाबिन्दुघृतं द्रुतम्॥ २७० ॥
अनुपाने प्रदातव्यं जलमुष्णं तु सर्पिषः।
*यथाबलं यथाकालं घृतमेतत्प्रयोजयेत्॥ २७१ ॥*

थोहर का दूध दो पल, कमीला एक पल, आधा शाण सेंधा निमक, निशोथ एक पल, तथा आंवलों का स्वरस एक कुडव लेकर आधा प्रस्थ परिमित घीका पाक करे। फिर चार प्रस्थ पानी डालकर मन्द २ आंच देकर घीको पकावे। जब घृत सिद्ध होजाय तो उसे छानले। फिर शीशी में रखकर कांच के डाट से शीशी का मुख बन्द करदे।

इस का नाम महाबिन्दुघृत है। इसे अश्विनी कुमारों ने कहा है। यह घृत दस्त लाने वाले सब घृतों में से श्रेष्ठ है। इस घृत के जितने बूंद पिए जायेंगे, उतनी ही बार दस्त आवेंगे। यह बात सत्य है। जैसे सब राक्षसों को मारने के लिए इन्द्र का वज्र प्रसिद्ध है, उसी प्रकार पांच प्रकार के गुल्म रोग को दूर करने के लिए यह घृत है। यह घृत आठ प्रकार के उदर रोगों को, दारुण ऊर्ध्ववात, तथा कुष्ठरोग को दूर करता है। इस घृत का प्रयोग मनुष्य का बलाबल, तथा समय का विचार करके प्रयोग करना चाहिए ॥ २६३—२७१ ॥

## अथ सारस्वतं घृतम्—

आजं पयः शृङ्गवेरं वचा शिग्रुर्हरीतकी।
पिप्पली मरिचं पाठा सैन्धवं दशमं घृतम् ॥ २७२ ॥
शृङ्गवेराद्यो भागा लवणान्ताः पलोन्मिताः।
विदध्यात्तास्ततश्चैषां कल्कं कृत्वा प्रदापयेत् ॥ २७३ ॥
प्रस्थं पयसा घृतप्रस्थं विपाचयेत्।
...प्रयत्नं सुपूतं च काचकुम्भ्यां निधापयेत् ॥ २७४ ॥
सारस्वतं घृतञ्चैतत्समाख्यातं तु नामतः।
घृतमेतद्विशेषेण महामेध्यं रसायनम् ॥ २७५ ॥
अस्य प्रयोगाद्विन्देत स्मृतिं मेधां च मानवः।
विनिहन्ति विशेषेण जडगद्गदमूकताम् ॥ २७६ ॥
नष्टं च स्मरते ग्रन्थं श्रुतमात्रेण धारयेत्।
सुस्वरत्वं च जनयत्याशु सर्पिर्महोत्तमम् ॥ २७७ ॥

## सारस्वतघृतस्य मात्रादिकम्।

आरभ्य माषात्रितयात्तोलकार्द्धमितं परम्।
यथाबलं प्रयुञ्जीत भिषक् सारस्वतं घृतम् ॥ २७८ ॥
शृतेन गव्यदुग्धेन केवलं वा भिषग्वरः।
दिने द्विवारं युञ्जीत भोजनादौ विशेषतः ॥ २७९ ॥

इति श्रीमता सदानन्दशर्मणा प्राणाचार्येण प्रतिसंस्कृते
नवनीतके घृतप्रयोगविधानीयो नाम
द्वितीयोऽध्यायः समाप्तः।

सारस्वत घृत में बकरी का दूध, अदरक, बच, शोभाजनत्वक् (सहिंजने की छाल), हरड, पीपल, कालीमिर्च, पाठामूल (पाठा की जड़), सेंधानिमक, और गायका घी, ये दश औषधियां पड़ती हैं। अदरक से लवण तक औषधियों को अलग २ एक २ पल लेवे। इन का कल्क बनाकर घृत पाक करे। एक प्रस्थ परिमित घी लेकर चौगुना बकरी का दूध डालकर घी को पूर्व वर्णित कल्क के साथ पकावे जब घी सिद्ध होजाय तो छानकर शीशी में रखदे। इसका नाम सारस्वत घृत है। यह घृत विशेषतया मेध्य (बुद्धिवर्द्धक) तथा, रसायन है। इस के सेवन करने से मनुष्य की बुद्धि और स्मृति (स्मरणशक्ति) बढ़ती है। इस घृत के प्रयोग से विस्मृत ग्रन्थ भी फिर स्मृतिपथ में आजाता है। सुनने पर ही सब शास्त्रों को धारण करता है। स्वर में मधुरता आजाती है। यह घृत अत्युत्तम है। तीन मासे से लेकर आधे तोले तक इस घृत की मात्रा है। इस घृत को वैद्य बलाबल का विचार करके प्रयोग करे। इस घृत को गाय के गरम दूध के साथ अथवा केवल ही दिन बार भोजन से पहिले सेवन करना चाहिए॥ २७२—२८६॥

इति सदानन्दशर्मणाप्रणीताया सारदीपिकाख्यायां नवनावनीत ..ख्यायां घृतप्रयोगविज्ञानीयो नाम द्वितीयोऽध्यायः समाप्त.।

---

# अथ तैलप्रयोगविज्ञानीयस्तृतीयोऽध्यायः।

## अथ प्रथमं बलातैलम्।

बलातैलं प्रवक्ष्यामि वातरोगनिबर्हणम्।
आत्रेयानुमतं सिद्धं वन्ध्यानां गर्भदं शुभम्॥ १॥
बलायाः खलु मूलानां शुष्कं पलशतं भवेत्।
गुडूच्याः पादिकं भागं रास्ना दशपलोन्मिता॥ २॥
प्रक्षाल्य जर्जरीकृत्वा पचेद्द्विव्येन वारिणा।
जलाढकशते पक्त्वा दशांशमवशेषयेत्॥ ३॥
कषायेण तु तैलस्य चतुष्प्रस्थं विपाचयेत्।
दधिमस्तु च शुक्तञ्च तथैवेक्षुरसो भवेत्॥ ४॥
अर्धादिनाजपयसा शनैर्मृद्वग्निना पचेत्।

पलोन्मितानि पेष्याणि निम्नोक्तानि प्रदापयेत् ॥ ५ ॥
बलातिबलयोर्मूलं सरलं देवदारु च।
मुस्तं मधुकमञ्जिष्ठा तगरं पद्मकागुरुम् ॥ ६ ॥
हरेणवेलाव्याघ्रनखं केशरं सुरसांशटीम्।
मुद्गपर्णी माषपर्णी जीवकर्षभकावुभौ ॥ ७ ॥
जानीयात्तद्यदा सिद्धमथैनमवतारयेत्।
पत्रकल्कं ततःपूतं प्रदद्यादवतारिते ॥ ८ ॥
तत्प्रसन्नं परिस्राव्य निदध्याद्भाजने शुचौ।
ततः प्रयुञ्ज्यान्मातिमान् यथाव्याधि यथाबलम् ॥ ९ ॥
प्रयोज्यमेतदभ्यङ्गे नस्ये पानेऽनुवासने।
आहारे कर्णयोश्चैव बस्तिपूत्तरबस्तिषु ॥ १० ॥
क्षयो वा यदि वा कासःश्वासो वा यदिवा ज्वरः।
मूर्च्छा वा यदि वा चक्षुर्दिर्दौर्बल्यं भिन्नवर्णता ॥ ११ ॥
श्वयथुं शुक्रदोषांश्च गुल्मं प्लीहानमेव च।
वर्माणि ग्रहणीदोषं शोषमर्शोऽभितापिताम् ॥ १२ ॥
अपस्मारं धनुःस्कंभं तैलमेतच्चिकित्सति।
त्वग्गताश्चैव ये वातास्तथा मज्जानमाश्रिताः ॥ १३ ॥
सिरागताः स्नायुगतास्तथा सर्वगताश्च ये।
सर्वान् वातान् शमयति भृशं नास्त्यत्र संशयः ॥ १४ ॥
ऋतुकाले च नारीषु शिरःस्नातासु दापयेत्।
वन्ध्यापि लभते गर्भं प्रयोगादस्य निश्चितम् ॥ १५ ॥
वर्णभेदप्रशमनमलक्ष्मीशमनं शिवम्।
बलातैलं मतं चैतद्बलेन्द्रियविवर्द्धनम् ॥ १६ ॥

सब से पहिले विविधवातरोगनाशक बला तैल को कहता हू। यह तैल आत्रेय संमत है। इसके प्रयोग से वन्ध्या स्त्रियां गर्भधारण करती हैं। यह अनुभूत है। खरेटी की सूखी हुई जड एक सौ पल लेवे। गिलोय पचीस पल परिमित ले। और रास्ना दशपलपरिमित ले इन तीन औषधियों को लेकर निर्मल जल से धोडाले। तदनन्तर इनको कूटकर साफ पानी में डालकर पकावे। पकाने के लिये एक सौ आढक परिमिति पानी डाले, जब दशांश शेष रहजाय तब उतार ले इस क्वाथ के साथ चार प्रस्थ परिमित

तैल का पाक करे। तैल के परिमाण के समान दधिमस्तु (दही का पानी), सिरका तथा ईख का रस डालकर पाक करे। तदनन्तर तैल के परिमाण से आधा बकरी का दूध डालकर मन्द मन्द आंच देकर तैल पाक करे। नीचे लिखी हुई प्रत्येक औषधी को एक एक पल परिमित लेकर कल्क बनाकर डाले। खरेटी की जड़, कंघी की जड़, सरलकाष्ठ, देवदारु, नागरमोथा, मुलहठी, मजीठ, तगर, पद्माख, अगुरु, रेणुका, इलायची, व्याघ्रनख, नागकेशर, सुरसा, कचूर, मुद्गपर्णी, (बनमूंग), माषपर्णी (वन उरद), जीवक तथा ऋषभक इन औषधियों का कल्क बनाकर डाले। जब तैल सिद्ध होजाय तब उसे उतार ले। तब इस में तेजपात प्रभृति सुगन्धि द्रव्यों का कल्क डालदे। जब यह निर्मल हो जावे तब उसे छानकर पवित्र पात्र में रखदे। फिर विज्ञ वैद्य मनुष्यों के बलाबल का विचार करके रोगो में प्रयोग करे। इस तैल को अभ्यङ्ग, नस्य, पान, तथा अनुवासन के लिये प्रयोग में लावे। इस तैल को भोजन के साथ भी प्रयोग में ला सकते हैं। इस तैलको कानों में भी डाल सकते हैं। इस तैल के प्रयोग करने से क्षय, खांसी, श्वास, ज्वर, मूर्च्छा, वमन, (उलटी आना), दुर्बलता, भिन्नवर्चता, शोष, शुक्रदोष, गुल्म, प्लीहरोग, वर्ध्म, सग्रहणी, शोथ, मदात्यय, अपस्मार, तथा धनुःस्तम्भ नष्ट होता है। इस के प्रयोग से त्वग्गत, मज्जागत, सिरागत, स्नायुगत, तथा सर्वाङ्गगत वात दूर हो जाता है। यह तैल सब वात रोगों को दूर करता है इसमें संशय नहीं है। ऋतुकाल में चौथे दिन शिरःस्नान करने के अनन्तर इस तैल का प्रयोग करे। उक्त समय में इस तैल का प्रयोग करने से वन्ध्या स्त्रियां भी गर्भ धारण करलेती हैं। यह तैल वर्ण दोष को दूर करता है कान्ति वर्द्धक है। बल तथा इन्द्रिय को बढ़ाता है। इसका नाम बलातैल है॥ १—१६॥

## अथ द्वितीयं बलातैलम्।

बलाशतकषायेण तैलस्यार्द्धाढकं पचेत्।
कल्कैः मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः॥ १७॥
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागरुकेशरैः।
गन्धैश्च जीवनीयैश्च दुग्धद्विद्रोणसाधितम्॥ १८॥
एतन्मृद्वग्निना पक्वं स्थापयेद्राजने शुभे।
सर्ववातविकारांस्तु सर्वधात्वन्तराश्रयान्॥ १९॥
शमयेत्तैलमेतत्तु छिन्नाभ्रमिव मारुतः।

बलातैलं नरेन्द्रार्हमेतद्वातविकारनुत् ॥ २० ॥

खरैंटी की जड़ एक सौ पल लेकर एक द्रोण (मान परिभाषा के अनुसार दो द्रोण) परिमित पानी में डालकर पकावे। जब यह पानी चतुर्थांश रहजाय तब उसे निकालकर छान ले। फिर इस क्वाथ के साथ आधा आढक परिमित तैल का पाक करे पाक करने के समय मुलहठी, मजीठ, चन्दन, कमल, पद्माख, छोटी इलायची, पीपल, कूठ, दालचीनी, इलायची, अगर, तथा नागकेशर इन औषधियों का कल्क बनाकर डाले। फिर सुगन्धित द्रव्य, तथा जीवनीय द्रव्यों का कल्क बनाकर तैल पाक करे। तदनन्तर दो द्रोण परिमित दूध डालकर पाक करे। इस तैल को मन्द मन्द अग्नि द्वारा पकाकर पवित्र पात्र में रखदे। वायु के वेग से जैसे छिन्न मेघमाला नष्ट होती है उसी प्रकार इस तैल के सेवन करने से सर्वधातुसमाश्रित विविध प्रकार के वात विकार नष्ट हो जाते हैं। यह बलातैल राजाओं के प्रयोग करने के योग्य है। यह विशेषतया सबै वात रोगों को दूर करता है ॥ १७—२० ॥

## अथ रास्नादितैलानि।

कल्पेनानेन रास्नाया गुडूच्या मधुकस्य च।
स्वनामाख्यं पचेत्तैलं तद्वत्सहचरस्य च ॥ २१ ॥

पूर्वोक्त रीति से रास्ना, गिलोय, मुलहठी, तथा सहचर इन औषधियों का तैल बनावे। और अपने अपने नाम से उनका निर्देश करे ॥ २१ ॥

## अथ तृतीयं बलातैलम्

शतं सुतुलितं कुर्याद्बलामूलस्य पण्डितः।
पचेत्तोये चाढद्रोणे चतुर्भागावशेषितम् ॥ २२ ॥
पलानि दश पिष्टानि बलायास्तत्र दापयेत्।
लुञ्चितानां तिलानाञ्च, दत्त्वा तैलाढकं तथा ॥ २३ ॥
चतुर्गुणेन पयसा पचेन्मृद्वग्निना भिषक्।
अनेन विधिना तैलं दशकृत्वो विपाचयेत् ॥ २४ ॥
सिद्धमेतद्बलातैलं नैकरोगविनाशनम्।
पानेऽभ्यङ्गे भोजने च नस्ये वस्तौ च शस्यते ॥ २५ ॥
वातव्याधिषु सर्वेषु रक्तपित्ताश्रयेषु च।

व्यापन्नानां च योनीनां शस्तं नष्टे च रेतसि ॥ २६ ॥
तालुशोषं तृषां दाहं पार्श्वशूलमसृग्दरम् ।
हन्ति शोषमपस्मारं विसर्पं सशिरोग्रहम् ॥ २७ ॥
आयुर्वृद्धिकरं बल्यं कासश्वासविनाशनम् ।
सर्वरोगहरञ्चैतद्बलातैलं प्रजाकरम् ॥ २८ ॥

खरेंटी की जड़ एक सौ पल लेकर कूट ले । तदनन्तर दो द्रोण परिमित पानी में डालकर उसका क्वाथ बनावे । जब पानी चतुर्थांश रहजाय तब उसे छानकर रखदे । और दश पल परिमित खरेंटी के मूल का कल्क बनाकर रखले । तथा तुषरहित तिलों को भी दशपल लेकर ( उलूखल में कूटकर अथवा शिला में पीसकर ) पिष्टिका बनाकर रखले । तदनन्तर इस क्वाथ, तथा कल्क से एक आढक तिलतैल का पाक करे । पाक करते समय स्नेह से चौगुना दूध डालकर मन्द मन्द आंच देकर पाक करे । इसी रीति से ( अर्थात् एक सौ पल परिमित बला के क्वाथ, तथा निर्दिष्ट मान में बला तथा तिलों का कल्क डालकर चौगुने दूध के साथ ) दशबार तैल पाक करे । यह बला तैल अनेक रोगों को दूर करता है । इस तैल का प्रयोग पान, अभ्यङ्ग, ( मालिश ), भोजन, नस्य, तथा बस्तिकर्म, के लिए विशेषतया प्रशस्त है । इस तैल के प्रयोग से विविध प्रकार की वातव्याधियां, तथा रक्तपित्ताश्रित रोग सब दूर हो जाते हैं । यह तैल योनिव्यापत्तियों में तथा नष्टशुक्र रोग में विशेषतया लाभदायक है । यह तैल तालुशोष, प्यास, दाह, पार्श्वशूल, रक्तप्रदर, शोष, मिरगी, विसर्प, तथा शिरोवेदना को दूर करता है । यह तैल आयु बढ़ाता है, शारीरिक बल का उपचय करता है, और खांसी का तथा श्वास को नष्ट करता है । सब रोगों को दूर करने के लिए इसका प्रयोग करे ॥ २२—२८ ॥

## अथ अमृततैलम्

सुप्रज्ञावश्विनौ देवौ भिषजौ देवपूजितौ ।
ऊचतुः परमेताद्धि तैलं पुष्टिविवर्द्धनम् ॥ २९ ॥
सर्वव्याधिप्रशमनं राजार्हममृतोपमम् ।
अमृतं नाम विख्यातं तैलं बलकरं नृणाम् ॥ ३० ॥
सुभूमौ मधुकं जातमुद्धरेत्कृतमङ्गलः ।
पुण्येण प्रयतो विप्रान् स्वस्तिवाच्य समासतः ॥ ३१ ॥

ग्राहयेत्स्वरसं तस्य चतुष्पात्रं विचक्षणः।
प्रपौण्डरीकममृतां विसग्रन्थिं शतावरीम् ॥ ३२ ॥
शृङ्गाटकान्यामलकानुदुम्बरकशेरुकाः।
क्षीरिणां चैव वृक्षाणां त्वचश्चैव पृथक् हरेत् ॥ ३३ ॥
कुशकाशेक्षुमूलानि शरवीरणयोस्तथा।
गुन्द्राणां नाडिकानाञ्च मूलं क्रौञ्चादनानि च ॥ ३४ ॥
बदरीञ्च विदारीञ्च वेतसं साटरूपकम्।
निम्बशाल्मलिखर्जूरनालिकेरप्रियङ्गवः ॥ ३५ ॥
पटोलं कुटजं द्राक्षां समृणालं च चन्दनम्।
ककुभं चाश्वकर्णञ्च लामज्जकघनञ्जयौ ॥ ३६ ॥
कषायमधुराणां च यथालाभं त्वचस्तथा।
भागाँश्चतुष्पलान्कृत्वा द्विद्रोणेऽपां विपाचयेत् ॥ ३७ ॥
रसेऽष्टभागशेषे तु कल्कैरेभिर्विपाचयेत्।
बलां नागबलां जीवामात्मगुप्तां कशेरुकाम् ॥ ३८ ॥
नतं रसं च स्पृक्कां च सूक्ष्मैलां त्वचमेव च।
जीवर्षभकौ मेदे मधुकं नीलमुत्पलम् ॥ ३९ ॥
कुङ्कुमं पद्मकोशीरमगुरुं पत्रमेव च।
विदारीं क्षीरकाकोलीं वीरामपि च शारिवाम् ॥ ४० ॥
शतावरीं प्रियङ्गुञ्च गुडूचीं पद्मकेशरम्।
लामज्जकं चन्दनानि राजादनफलानि च ॥ ४१ ॥
यष्टीमधुकमञ्जिष्ठामंशुमत्यः पलोन्मितान्।
श्लक्ष्णपिष्टानिमान्कृत्वा शनैर्मृद्वग्निना पचेत् ॥ ४२ ॥
तैलपात्राणि चत्वारि तैलादष्टगुणं पयः।
पयोऽर्द्धभागेन भिषक् प्रदद्यादम्लकाञ्जिकम् ॥ ४३ ॥
शतशोऽथ विपक्वंय्यं सहस्रगुणमेव वा।
सम्यक् सिद्धस्य चाप्यस्य स्वेतद्भवति लक्षणम् ॥ ४४ ॥
आलोड्यते करेणैव पाककाले ह्युपस्थिते।
स्वस्तिवाच्य द्विजातींस्तु प्रयतः कृतमङ्गलः ॥ ४५ ॥

